# अथ प्रथमोऽध्यायः

[1]प्रजापतिर्वै संवत्सरः । तस्यैष आत्मा[a] यन्महाव्रतम्[b] । तस्माद् एनत् परस्मै न शंसेन् नेत् सर्वेषां भूतानाम् आत्मानं परस्मिन् दधानीति ॥

अथो इन्द्रस्यैष आत्मा यन्महाव्रतम् । तस्माद् एनत् परस्मै न शंसेन् नेद् इन्द्रस्याऽऽत्मानं परस्मिन् दधानीति ॥

अथो यम् एवैतम् ऋङ्मयं[2] यजुर्मयं साममयं पुरुषं संस्कुर्वन्ति तस्यैष आत्मा यन्महाव्रतम्[c] । तस्माद् एनत्[3] परस्मै न शंसेन् नेत् सर्वेषां छन्दसाम् आत्मानं परस्मिन् दधानीति ॥

कामं तु सत्त्रिणां होता शंसेत् । पित्रे वाऽऽचार्याय वाऽऽत्मने हैवाऽस्य तच्छस्तं भवति । आत्मनैव तद् यज्ञं समर्धयति[d] । तस्य [4]पञ्चविंशः स्तोमः[4] । चतुर्विंशतिर्वै[5] संवत्सरस्याऽर्धमासाः, संवत्सरस्यै-वाऽऽप्त्यै । अथो प्रजापतिर्वै संवत्सरः पञ्चविंशः । अथो चतुर्विंशो वै पुरस्तात् कृतो भवति तस्यैषा गतिर् यत् पञ्चविंशः[e] । ऐन्द्रश्च ऋषभः प्राजापत्यश्चाऽज उपालभ्यौ[6] । ऐन्द्रं वा एतद् अहः । इन्द्र उ वै प्रजापतिः । तत् प्राजापत्यं रूपम् । अथो एतद् एव पशुष्वैन्द्रं रूपं यद् ऋषभः ॥ १ ॥

तस्य विशोविशो वो अतिथिम् ( ऋ ८, ७४, १-१२ ) इति द्वादशर्चम्[f] आज्यम् । द्वादश वै मासाः संवत्सरः संवत्सरस्यैवाऽऽप्त्यै ।

---

१. ग्रन्थादौ—ओं नमः श्री गणेशाय [°य नमः वि³ वा] वि³; ओं नमः श्री ब्रह्मणे भा²; ओं सरस्वत्यै नमः भा⁴ । २. ऋग्म° वि¹ । ३. एतत् भा¹'³ । ४-४. °शस्तो° वि³ भा⁴ । ५. °विति° वि³ । ६. °लम्भ्यौ भा¹ वा वि³ ॥

---

*a*) भौतिकं शरीरमिति भावः । *b*) तु. ऐब्रा ३,१७,२; ऐआ १ १,१; प्रभृ., तैसं ७,१,१०,४; तैआ १,२,६; कासं ३४,५; तांब्रा ४,१०,१; शांश्रौ १७; १८; लाश्रौ ३,१०; ४,३; काश्रौ १३, ३ । *c*) तु. शांआ ४, ६ । *d*) संयोजयतीत्यर्थः । *e*) तु. कौब्रा १९, ८ । *f*) अन्त्यास्तिस्रः [१३-१५] दानस्तुतयो न परिगृह्यन्ते ।

तस्मिन् वै द्वे छन्दसी भवतो गायत्र्यश्चाऽनुष्टुभश्च[1]। अग्निं नरो दीधितिभिरण्योः (ऋ ७, १) इत्येतत् पञ्चविंशत्यृचम् उपसंशंसति। पञ्चविंशो हि स्तोमः। तद् वै शस्त्रं समृद्धं यत् स्तोमेन संपद्यते। तस्मिन् वै द्वे छन्दसी भवतो विराजश्च [2]त्रिष्टुभश्च। तानि[2] चत्वारि संपद्यन्ते। चतुष्टयं वा इदं सर्वम्[a] अस्यैव सर्वस्याऽऽप्त्यै।

त्रैष्टुभः प्रउगः। इन्द्रस्यैवैतच्छन्दो यत् त्रिष्टुप्। तद् एनं स्वेन छन्दसा समर्धयति। कुविद् अङ्ग नमसा ये वृधासः (ऋ ७,९१,१-३) इति वायव्यं महद्वद् वृधवत्। महद्वत्[3]— महद्वद् ध्येतद् अहः। अत एवोत्तरं तृचम् ऐन्द्रवायवम्[b] यावत्तरस्तन्वो यावदोजः इति यावन्नरश्चक्षसा दीध्यानाः (ऋ ७, ९१, ४-६) इत्येतेन रूपेण। उद् वां चक्षुर्वरुण सुप्रतीकम् इति मैत्रावरुणम् देवयोरेति सूर्यस्ततन्वान् (ऋ ७,६१,१-३) इत्येतेन रूपेण। क उ श्रवत् कतमो यज्ञियानाम् (ऋ ४, ४३, १) इत्याश्विनम् यं सूर्यस्य दुहिताऽवृणीत (ऋ ४,४३,२) इत्येतेन रूपेण। कथा महाम् अवृधत् कस्य होतुः (ऋ ४, २३, १-३) इत्यैन्द्रं महद्वद् वृधवत्। महद्वद्— महद्वद् ध्येतद् अहः। को वस्त्राता वसवः को वरूता इति वैश्वदेवम् सहीयसो वरुण मित्र मर्तात् (ऋ ४,५५, १-३) इत्येतेन रूपेण। उत स्या नः सरस्वती जुषाणा इति सारस्वतम् द्वारावृतस्य सुभगे व्यावः (ऋ ७,९५,४-६) इत्येतेन रूपेण। एष वा उ कद्वाँस्त्रैष्टुभस् तृचक्लृप्तो वामदेव्यः प्रउगः। प्रजापतिर् वै वामदेवः प्रजापतावेव तत् सर्वान् कामान् ऋध्नुवन्ति।

तद् आहुर् न त्रैष्टुभं प्रातःसवनं स्यात्। मोहयति क्लृप्तछन्दसो यज्ञमुखम्। ऐकाहिकम् एव स्यात्। ब्रह्म वा एकाहः। ब्रह्मैतद् अहः। ब्रह्मणैव[4] तद् ब्रह्म समर्धयति॥ २ ॥[c]

---

१. गायत्रश्चा° भा[२]। २-२. त्रिश्चतानि भा[२]। ३. नास्ति भा[४]।
४. ब्रह्मण्येव भा[१,४], ब्रह्मण्यैव भा[२]।

---

*a*) तु. कौब्रा २,१; १९,४; २८,७। *b*) तु. शांआ २,७; ८। *c*) तु. ऐआ १,१,२; शांश्रौ १७,७,१३; ८,१-४।

आ त्वा रथं यथोतये ( ऋ ८, ६८, १-३ ) इति मरुत्वतीयस्य प्रतिपत्। इदं वसो सुतम् अन्धः ( ऋ ८, २, १-३ ) इत्यनुचरः। एष एव नित्य एकाहाऽऽतानः[a]। तस्योक्तं ब्राह्मणम्[b]। असत् सु मे जरितः साभिवेग. ( ऋ १०, २७ ) इति वासुक्रं पूर्वं शस्त्वा महाँ इन्द्रो नृवद् आ चर्षणिप्राः ( ऋ ६, १९ ) इत्येतस्मिँस्त्रैष्टुभे निविदं दधाति। तद् यद् वासुक्रं पूर्वं शंसति। इन्द्र उ वै वसुक्रः। अथ यत् महाँ इन्द्रो नृवद् आ चर्षणिप्राः ( ऋ १०, २७ ) इति महद्वत्। महद्वद् ध्येतद् अहः ॥ ३ ॥[c]

अथैता आज्याहुतीर् जुहोति। स्वस्त्ययनम् एव तत् कुरुते। यज्ञस्यैव शान्त्यै यजमानानां च भिषज्यायै। ता वा अष्टौ भवन्ति। एताभिर् वै देवाः सर्वा अष्टीर् आश्नुवत। तथो एवैतद् यजमाना एताभिर् एव सर्वा अष्टीर् अश्नुवते।

अथैतान् परिमादाञ् जपाञ् जपति। परिमादः — आपो वै परिमादः। अद्भिर् हीदं सर्वं परिमत्तम्। अथ वै परिमादः। [1]अन्नम् एतद्[1] उक्थम्। आपो वा अन्नस्याऽऽयतः पूर्वा आयन्ति, आपः परिमादः। अथ वै परिमादो यन् नखानि दन्तास् तनूर् लोमानीति। तस्मात् कृत्याः संपद्वत्यो हि भवन्ति। [2]पञ्चविंशतिर् निधनम्[2]।

आङ्गिरसं प्रतिष्ठायैः तद्रूपम्, भूतेच्छदां[3] साम प्रियम् इन्द्रस्य धामोपजगामेतिः क्रोशाऽनुक्रोशे, अरात्सुः अप्येषां पयः, अरात्सुः अर्कं चार्कपुष्पं च। अयं वा अग्निरर्कः। असावादित्योऽर्कपुष्पम्। तेषु यदा पर्यायं सामगाः स्तुवते, अथ होतारम् आहुर्[4] अनुजपेति।

---

१-१. अन्नमेव तद् वि[1,3] भा[3]। २-२. °तिनि° वि[3] भा[2]। ३. भा[2]., F. (तु. सा.); °छंदसां वि[3], °छंदां वि[1] भा[3] वा, °छंदांसि भा[4]; °छदां भा[2] (प्रान्तपाठः)। ४. आह भा[3]।

---

*a*) एकाहस्यैषा व्यवस्थितिः ज्ञेया (तु. K.; वैतु. सा. [ऐब्रा ५, १, १])। *b*) तु. ऐब्रा ५,२,१; शांब्रा १७। *c*) तु. कौसू १५, २; १६, ८।

ते यदि स्तुवीरन् अथानुजपेत्[a] । 'यदि चैवं' स्तुवीरन् यदि च स्तुवीरन् अन्वेव जपेत् ॥ ४ ॥

तानि वा एतानि सप्त देवच्छन्दांसि[२b] भवन्ति । तस्माद् एनान् अनुजपेत् । अथो ऐन्द्रं वा एतद् अहः । ऐन्द्रा जपाः । तस्माद् एनान् अनुजपेत् । अथाऽत्रैव तिष्ठन्न् अग्निं यथाङ्गम् उपतिष्ठते नमो नम इति । नहि नमस्कारम् अति देवाः । समिद्धस्यैवैतान् भागान् उपतिष्ठेत यद्युत्तरवेदौ भवति । अथाऽत्रैव तिष्ठन्न् आदित्यम् उपतिष्ठते । आकाशं शालायै कुर्युरिति हैक आहुः । देशेन त्वेवोपतिष्ठेत[३] तिरोहितो ह वा एष एतस्मिन् परम उक्थे परम[४c] आशिषो वदति — सं महान् महत्याऽदधाद् इति । अग्निर् वै महान् इयं[५] पृथिवी महती । एतौ हि समधत्ताम् । सं देवो देव्याऽदधाद् इति । वायुर् वै देवोऽन्तरिक्षं देवी । एतौ हि समधत्ताम् । सं ब्रह्म ब्राह्मण्याऽदधाद्[६] इति । असावादित्यो ब्रह्माऽसौ द्यौर्ब्राह्मणी । एतौ हि समधत्ताम् । तद् इमाँल् लोकान् त्संदधाति । एतद् उक्थं[७] शंसिष्यते[८] ॥ ५ ॥[a]

विश्वामित्रो ह वा इन्द्रस्य प्रियं धामोपजगाम शस्त्रेण च व्रतचर्यया[९] । तं हेन्द्र उवाच विश्वामित्र वरं वृणीष्वेति । स होवाच विश्वामित्रस् त्वाम् एव विजानीयाम् इति । द्वितीयम् इति । त्वाम् एवेति । तृतीयम् इति । त्वाम् एवेति । तं हेन्द्र उवाच महांश्च महती चास्मि । देवश्च देवी चास्मि । ब्रह्म च ब्राह्मणी चास्मीति । तत उ ह विश्वामित्रो विजिज्ञासाम् एव चक्रे । तं हेन्द्र उवाचैतद् वा अहम् अस्मि यद् एतद् अवोचं यद् वा

---

१-१. यद्यदित्येवं वि[३] । २. देवतं छ° वि[१] । ३. त्वोप॰ भा[३] । ४. परमा भा[२'३] । ५. °यं वै भा[१] । ६. ब्रह्म° वि[३] । ७. उक्तं वि[३] । ८. संशिष्यते भा[३], वि[३] (२यो हस्तः), संसिष्यते भा[४] । ९. °चर्याय वि[३] ।

---

*a*) तु. शांश्रौ १७, १२, ५ । *b*) तु. शब्रा ७, ३, १, ४१ ।
*c*) आदित्ये इति शेषः (तु. बौश्रौ ९,२०) ।

[१]ऋषेऽतो भूयोऽतपास्[१] तदेव तत् स्याद् यद् अहम् इति। तद् वा इन्द्रो व्याहृतीर् ऊचे ता[२] उपाऽऽप्ता[a] आसन्न् इति।

अथोपनिधाय प्रेङ्खफलकं त्रिर् [३]अभ्यन्य त्रिर्[३] अभ्यवान् इति ॥ ६ ॥[b]

तद् वा औदुम्बरं भवति। ऊर्ग् वा अन्नाद्यम् उदुम्बर[c] ऊर्जोऽन्नाद्यस्योपाऽऽप्त्यै[d]। अथैनद् उरसा संस्पृश्य दक्षिणं भागम्[e] आत्मनोऽतिहरञ् जपति — अर्कोऽसि वसवस्त्वा गायत्रेण च्छन्दसाऽऽरोहन्तु ते त आरोळ्हार इत्येव तद् आह। तान् अहम् अन्वारोहामि राज्यायेति। राज्यं ह वा इदम् उ हैव चक्षते।

अथोत्तरं भागम् आत्मनोऽतिहरञ् जपति — रुद्रास्त्वा त्रैष्टुभेन छन्दसाऽऽरोहन्तु[४] ते त आरोळ्हार इत्येव तद् आह। तान् अहम् अन्वारोहामि स्वाराज्यायेति। स्वाराज्यं ह वै राज्याद् अधितराम् इव।

अथ दक्षिणं भागम् आत्मनोऽतिहरञ् जपति—आदित्यास्त्वा जागतेन च्छन्दसाऽऽरोहन्तु ते त आरोळ्हार इत्येव तद् आह। तान् अहम् अन्वारोहामि साम्राज्यायेति। साम्राज्यं ह वै स्वाराज्याद् अधितराम् इव।

अथोत्तरं भागम् आत्मनोऽतिहरञ् जपति—विश्वे त्वा देवा आनुष्टुभेन च्छन्दसाऽऽरोहन्तु ते त आरोळ्हार इत्येव तद् आह। तान् अहम् अन्वारोहामि कामप्रायेति। कामप्रं ह वै सर्वेषां पराध्यम्।

अथ समधिसृप्य प्राञ्चौ पादा उपावहृत्य भूमौ प्रतिष्ठापयति। उद्यततरो ह वा एषोऽस्माल् लोकाद् भवति। तद् यत् प्रतिष्ठापयति तद् अस्मिँल् लोके प्रतितिष्ठति प्रतिष्ठायाम् अप्रच्युत्याम्[६]। अथ त्रिर् अभ्यन्य त्रिर् अभ्यवान् इति।

---

१-१. वि[१,३] भा[४] प्रभृ.; ऋषेऽभूयोऽतपाः F. २. त्ये भा[३]। ३-३. °भ्यन्य° भा[४]। ४. भा, T.; °हतु वि[१] (रयो ह्स्तः), भा[१,३,४]।

---

*a*) =पर्याप्ताः (तु. कौब्रा १५, ५)। *b*) तु. शांश्रौ १७, १५, १३। *c*) तु. ऐब्रा २,२,३; ७; तांब्रा ५,५,२; तैब्रा १,२,६,५। *d*) तु. ऐब्रा १,२,३ अवरुद्ध्यै इति। *e*) तु. ऐब्रा ५,४,१४; शांश्रौ १७,१६।

अथोपरि प्रेङ्खफलके दक्षिणोत्तरिणम् उपस्थं कृत्वा दक्षिणेन प्रादेशेन पश्चात् प्राङ् प्रेङ्खफलकम् उपस्पृशति। प्रजापतिष् ट्वाऽऽरोहतु वायुः प्रेङ्खयत्विति। प्रजापतिर् वा एतद् आरोहति[1] वायुः प्रेङ्खयति यज् जीवम्। अथ त्रिर् अभ्यन्य त्रिर् अभ्यत्रान् इति। अथ प्राञ्चौ पाणी परिगृह्य जपति॥ ७॥[a]

सं वाक् प्राणेन, सम् अहं प्राणेन, सं चक्षुर् मनसा सम् अहं मनसा, सं प्रजापतिः पशुभिः सम् अहं पशुभिर् इत्याशिषम् एव तद् वदते। सुपर्णोऽसि[2] गरुत्मान् इति। प्राणो वै सुपर्णः। प्रेमां वाचं वदिष्यामीति प्रवदिष्यन् ह्येष एतां वाचं वदति बहु करिष्यन्तीं बहु करिष्यन्न् इति। बहु ह्येषा वाक् करिष्यन्ती[3] भवति। बह्वयं य एतस्याऽह्नः शस्त्रं प्राप्नोति। बहोर् भूयः करिष्यन्तीं बहोर् भूयः करिष्यन्न् इति बहोर् भूयो ह्येषा वाक् करिष्यन्ती भवति बहोर् भूयोऽयं य एतस्याऽह्नः शस्त्रं प्राप्नोति। स्वर् गमिष्यन्तीं स्वर् गमिष्यन्न् इति स्वर् ह्येषा वाग् गमिष्यन्ती भवति स्वर् अयं य एतस्याऽह्नः शस्त्रं प्राप्नोति। स्वर् इमान् यजमानान् वक्ष्यन् इत्येव ब्रूयात्। यं द्विष्यात् तं ब्रूयान् नाऽमुं नाऽमुम् इति। स यावतो ह वा एष एतस्माद् देवरथात् प्रतिसंख्याय निर्धूनुते [4]निष् टद् धूनुते[4]। तौ ह न भोग्यायैव[5] भवतः। तम् एवैतत् प्रधर्षयति। तम् एवैतत् प्रधर्ष्याऽऽत्मन् धत्ते। वायुर् वा एष प्राणो भूत्वैतद् उक्थं शंसति। तम् एवैतत् प्रधर्षयति। तम् एवैतत् प्रधर्ष्याऽऽत्मन् धत्ते। गुरौ वा एष युक्तो भवति य एतस्याऽह्नः शस्त्रं प्राप्नोति, तस्य गुरौ युक्तस्येश्वरः प्राणो यदि नाऽपपराजेतोः। तम् एवैतत् प्रधर्षयति। तम् एवैतत् प्रधर्ष्याऽऽत्मन् धत्ते। न ह वा एतस्यै देवतायै दिग्धेन[b] नाऽसिना न परशुना न

---

१. भा. F. K.; °हतु वि[1] [२यो हस्तः], भा[1,3,4]। २. सुव° भा[1]। ३. °ष्यती भा। ४-४. निष्टर्द्धनु° भा[3] वा। ५. °ग्यायै वि[3] भा[1]।

---

a) तु. ऐआ ५,१,४; लाश्री ३,१२,१। b) =विषदिग्धेन शरेण।

केनचनाऽवतर्दोऽस्ति । तद् य एवं विद्वांसम् अपवदति स एव पापीयान् भवति । न स य एवं वेद । नैवं विदुषोऽवतर्दो नैवं विदुषोऽवतर्दः ॥ ८ ॥[a]

**इति शाङ्खायनारण्यके प्रथमोऽध्यायः ॥**[1]

---

१. इति शांखायनब्राह्मणे महाव्रतं नामैकत्रिंशत्तमोध्यायः समाप्तः (°व्रतस्य एकत्रिंशोऽध्यायः भा³) भा¹'³; इत्यारण्यकब्राह्मणे प्रथमोध्यायः भा²; प्रथमोध्यायः समाप्तः वि³ ।

---

*a*) तु. ऐब्रा ५, १, ५ ।

## अथ द्वितीयोऽध्यायः

हिंकारेण प्रतिपद्यत एतद् उक्थम् । प्राणो वै हिंकारः प्राणेनैवैतद्[1] उक्थं प्रतिपद्यते । अथो ऊर्ग् वै रसो हिंकार ऊर्जम् एव तद् रसम् एतस्मिन् उक्थे दधाति । अथो अमृतत्वं वै हिंकारोऽमृतत्वम्[2] एव तद् आत्मन् धत्ते । राजनं[3] पृष्ठं भवति । एतद् वै प्रत्यक्षं साम यद् राजनम् । तद् [a]एनत्[4] स्वेन साम्ना समर्धयति[5] । तद् अनिरुक्तासु भवति । अनिरुक्त उ वै प्रजापतिः । तत् प्राजापत्यं रूपम् । कवतीषु स्याद् इति हैक आहुः । को वै प्रजापतिः । तत् प्राजापत्यं रूपम् । अथैतं तूष्णींशंसम् उपांशु शंसति । वाग् वा एतद् अहर् मनस् तूष्णींशंसः । मनसैव तद् वाचं समर्धयति । तद् इद् आस भुवनेषु ज्येष्ठम् (ऋ १०, १२०, १-३) इति स्तोत्रियस्तृचः । वावृधानः शवसा भूर्योजाः (ऋ १०, १२०, २) इति वृधवन् महद्वत् । महद्वद् ध्येतद् अहः । a

स एष आत्मा पञ्चविंशः । तन् नदेनोपसृष्टं शंसति । आत्मा वै पञ्चविंशः प्रजा पशव उपसर्गः । प्रजयैव तत् पशुभिः प्रेष्यैर्[6] अन्नाद्येनेत्यात्मानम् उपसृजते । नदं व ओदतीनाम् (ऋ ८,६९,२) इति त्रैष्टुभानि पूर्वाणि पदानि करोति नदस्योत्तराणि । प्रथमेन त्रैष्टुभेन पदेन[7] प्रथमं नदस्य पदम् उपसमाधायाऽवस्यति । द्वितीयेन त्रैष्टुभेन द्वितीयं संधाय प्रणौति ।

---

१. °वैतदेतद् भा[1] । २. °मृतम् वि[1] । ३. °जानं भा[3], जनं च वि[1] । ४. तु. K. ; एनं वि[1,3] भा[4] F. । ५. यंति वि[3] । ६. प्रेष्ये वि[3] । ७. पादेन F., K.

---

a) तु. ऐआ १,३,१; २ ।

तृतीयेन त्रैष्टुभेन तृतीयं संधायाऽवस्यति। चतुर्थेन त्रैष्टुभेन चतुर्थं संधाय प्रणौति। एवं विहृतां प्रथमां त्रिः शंसति, पराचीर् उत्तरा एवं विहृता एव। या तृतीया सूक्तस्य तस्या उत्तरम् अर्धर्चम् उत्सृजति नदस्य चोत्तरम्। सोऽयं मुखस्य निवरस् तेन वाचं वदति मुखेन वै वाचं वदति। तौ पुरस्ताद् द्विपदानां शंसति तथा हाऽस्य स्तोत्रियानन्तर्हिता[1] भवत्यात्मानं शस्त्वा।[a]

अथ सूददोहसं[b] पर्वाणि संहितानि भवन्ति। अथो आपो वै सूददोहा अद्भिर् वा इमानि पर्वाणि संहितानि भवन्ति। अथो अमृतत्वं वै सूददोहा अमृतत्वम् एव तद् आत्मन् धत्ते। अथ वै सूददोहा आहावस्यैतद्[2] रूपम्। तद् यथा ह वै दारुणः श्लेष्म संश्लेषणं[c] स्यात् परिचर्मण्यं[d] वैवम् तृचाशीतिर् एव सूददोहाः सर्वेषां वेदानां संश्लेषिणी[3] ॥१॥[e]

अथैतानि शीर्षण्यानि शंसति। तानि वै त्रीणि तृचानि भवन्ति। त्रीणि वा अस्य शीर्ष्णः कपालानि भवन्ति। तान्येवैतैः संदधाति। तानि त्रीणि पुनरेकैकं त्रेधा त्रेधा ता नव ऋचो भवन्ति। नव वै शिरसि प्राणाः। तान्यर्कवन्ति भवन्ति। तद् एतस्याऽह्नो रूपम् ॥ २ ॥

अथैतं ग्रैवं शंसति। ता वै तिस्र ऋचो भवन्ति। त्रीणि वा आसां ग्रीवाणां पर्वाणि भवन्ति। तान्येवैताभिः संदधाति। उष्णिग् उत्तमा। सोऽयं स्कन्धो[4] विदलोऽव्यूळ्हः (ळः)[f] ॥ ३ ॥

---

१. °नंतरिता वि[3] भा[1,3]। २. °वस्य तद् वि[3] भा[3] ⌊२यो ह्स्तः⌋। ३. °षणी भा[3] वि[3]। ४. °न्दो भा[3]।

---

*a*) तु. ऐब्रा १, ३, ५। *b*) =ऋग्-विशेष-। सूद- (⌊= स्वादुपेय-, पयस्-⌋ <√स्वद्)+दोहस्- इति उस. उप. कर्तरि कृत्। *c*) = रज्जुः। *d*) = चर्मखण्डः (तु. शांब्रा ६,१२)। परि-चर्मन्- ⌊प्रास.⌋ + ⌊भावे⌋ यः प्र. उसं. (पा ५, १,१२६)। *e*) तु. ऐब्रा १,४,१-३; ५, १,६; २, १-६। *f*) = द्विधा विभक्तो व्यवस्थितश्चेति।

अथैताम् अन्त्यां[a] शंसति। सा वै त्रिष्टुब् भवति। तस्माद्[1] अन्तः स्थविष्ठः। ऋष्वा त इन्द्र स्थविरस्य बाहू (ऋ ६, ४७, ८) इति बाह्वोर् अभिरूपा। अथ रथन्तरस्य स्तोत्रियाऽनुरूपौ शंसति। तयोर् उक्तं ब्राह्मणम्। अथ धाय्यां शंसति। इयं वै धाय्या। इयं हि सर्वेषु भूतेषु हिता। सा वै दक्षिणे भागे धीयते। तस्माद् दक्षिणं भागं पुंसः स्त्र्यधिशेते। अथ राथन्तरं प्रगाथं शंसति। तस्योक्तं ब्राह्मणम्। य एक इद् धव्यश् चर्षणीनाम् (ऋ ६, २२) इति सूक्तं[b] तत् पक्षः। तस्य द्वितीयाम् उद्धृत्य विश्वो ह्यन्यो अरिराजगाम (ऋ १०, २८, १) इति। यैतस्य द्वितीया ताम् इह द्वितीयां करोति। तद् इमौ पक्षौ व्यतिषजत्यविवर्हाय। तस्माद् द्वाभ्यां पक्षाभ्यां सर्वाणि कर्माणि समश्नुते ॥ ४ ॥[c]

अथैतं प्रहस्तकं शंसति। ता वै तिस्र ऋचो भवन्ति। त्रीणि वा अस्य पाणेः पर्वाणि भवन्ति। तान्येवैताभिः संदधाति। अतिच्छन्दाः प्रथमा सोऽयम् अङ्गुष्ठः। तस्माद् अयम् अङ्गुष्ठः सर्वा अङ्गुलीः प्रत्येति। दक्षिणः[2] पक्षो राथन्तरः। अथ वा उत्तरः[3] पक्षो बार्हतः। एतेनैवोक्तो ब्राह्मणः। तौ वा एतौ पक्षौ बार्हतराथन्तरौ चतुर्विंशौ। चतुर्विंशतिर् वै संवत्सरस्याऽर्धमासाः संवत्सरस्यैवाऽऽप्त्यै ॥ ५ ॥[d]

अथैतानि चतुरुत्तराणि शंसति तद् अनूकम्। ता एकविंशतिर् ऋचो भवन्ति। एकविंशतिर् वा अस्याऽनूकस्य पर्वाणि भवन्ति। तान्येवैताभिः संदधाति। तानि वै सप्त तृचानि भवन्ति। सप्त वै छन्दांसि सर्वेषाम् एव छन्दसाम् आप्त्यै। तान्यर्कवन्ति भवन्ति। तद् एतस्याऽह्नो रूपम् ॥ ६ ॥

---

१. °स्माद् अयम् वि[3]। २. दक्षिणतः भा[3,4] वि[1]। ३. उत्तरतः भा[3,4] वि[1,3]।

---

*a*) तु. शांश्रौ १८, ४, १; ५, १। *b*) तु. कौब्रा २५, ५; ६।
*c*) तु. ऐब्रा १, ४, २। *d*) तु. ऐब्रा ५, २, २।

अथैता अशीतीः[a] शंसति। स्तोत्रियान् एवैताभिर् अनुशंसति गायत्र्या गायत्रम् औष्णिह्या च बार्हत्या च बृहद्रथन्तरे। इयम् एव दक्षिणं पार्श्वं गायत्री सव्यम् औष्णिही मध्यं बार्हती। मध्ये वा इदम् आत्मनोऽन्नं धीयते। त्रिष्टुभावन्तरेण त्रिष्टुम् नैविदी[b]। वैश्वामित्र्याव-र्कवत्यावभिरूपे। विश्वामित्रो ह्येनद् अपश्यत्। महद्वत्यो वृधवत्यः प्रतिपदो भवन्ति। महद्वद् वृधवत्। [1]महद्वत्— महद्वद् ध्येतद् अहः ॥ ७ ॥[c]

महाँ इन्द्रो य ओजसा (ऋ ८, ६, १) इत्येतया गायत्रीम् अशीतिं प्रतिपद्यते स्तोमैर्वत्सस्य [2]वावृधे (ऋ ८, ६, १) इति[2] महद्वत्या वृधवत्या। महद्वद् वृधवत्। महद्वत्[3] — महद्वद् ध्येतद् अहः ॥ ८ ॥

या इन्द्र भुज आभरः (ऋ ८, ९७, १) इत्येतया बार्हतीम् अशीतिं प्रतिपद्यते स्तोतारम् इन् मघवन्न् अस्य वर्धय (ऋ ८, ९७, १) इति महद्वत्या वृधवत्या। महद्वद् वृधवत्। महद्वत् — महद्वद् ध्येतद् अहः। अयं ते अस्तु हर्यतः (ऋ ३, ४४) आ मन्द्रैर् इन्द्र हरिभिः (ऋ ३, ४५) सूक्ते। तद् यद् एते अन्ततः शंसति संसिद्धाभिर् बृहतीभिर् औष्णिहीम् अशीतिं[4] समारोहाणीति ॥ ९ ॥

इन्द्रः सुतेषु सोमेषु (ऋ ८, १३, १) इत्येतयौष्णिहीम् अशीतिं प्रतिपद्यते विदे वृधस्य दक्षसो महान् हि षः (ऋ ८, १३, १) इति वृधवत्या महद्वत्या। वृधवन् महद्वत्। महद्वद् ध्येतद् अहः। ता वा एता अशीतयः संशस्ताः सप्तविंशतिशतान्यृचां संपद्यन्ते। सप्त वै विंशति शतानि संवत्सरस्याऽहोरात्राणां तद् अशीतिभिः संवत्सरस्या-ऽहोरात्राण्याप्नोति। सामनिधनैर् हैके गायत्रीर् उष्णिहः संपादयन्ति।

---

१. नास्ति भा³ वि³। २-२. °वृधो इ° भा⁴। ३. नास्ति भा²। ४. °शितिं वि³।

---

a) गायत्री-बृहती-उष्णिह इत्येताः तृचाशीतयः। b) तस्येदमीयः अण् प्र.। c) तु. ऐब्रा १,४,३; ५,२,३-५। शांश्रौ १८,७-२१।

चतुरक्षराण्यु हैके पुनर् आददते । बार्हत्या अशीत्या अशीतिं चतुरक्षराण्युद्धरति काकुभेभ्यः प्रगाथेभ्यश् चतुर्विंशतिं चतुरक्षराणि तानि चतुःशतं चतुरक्षराणि चतुःशते गायत्रीषूपदधाति । तथा ता गायत्रीर् उष्णिहः संपद्यन्ते । नाद्रियेत । अत्रैव संपन्नम् । इन्द्राय साम गायत (ऋ ८, ९८, १) इति । तद् यद् एतद् अन्ततः शंसति संसिद्धाभिर् उष्णिग्भिर् वशं समारोहाणीति ॥ १० ॥

अथ वशं[a] शंसति । उदरं वै वशः । तेन संसिद्धेनाऽऽनन्तर्यं जिगमिषेत् । यद् अतः किंच बहिर्धा[1] तत एव तच् छ्रपयति यद् अन्तर् उदरे । तस्माद् बह्व्यो देवता बहूनि च्छन्दांसि वशे शस्यन्ते । तस्माद् इदं बहु विश्वरूपम् उदरेऽन्नम्[2] अवधीयते । अथैतौ विहृतावर्धर्चौ । अथ सूददोहसम् । सा तत एवोत्सृज्यते । अत्र चतुर्विंशतिकृत्वः शस्ता भवति ॥ ११ ॥

अथैता द्विपदाः शंसति । प्रतिष्ठानीयं वै छन्दो द्विपदाः प्रतिष्ठित्या एव ॥ १२ ॥[b]

अथैतद् ऐन्द्राग्नं सूक्तं[c] गायत्रीशंसं शंसति । प्रतिष्ठे वा इन्द्राग्नी प्रतिष्ठित्या एव ॥ १३ ॥

अथैतद् आवपनं[d] शंसति । प्रतिष्ठा वा आवपनं प्रतिष्ठित्या एव । अथो एतान्येव पुनरर्वाचीनि भवन्ति ॥ १४ ॥

अथैतम् आनुष्टुभं समाम्नायं[3] शंसति । वाग् वा एतद् अहर् वाग् अनुष्टुब् वाच्येव तद् वाचं प्रतिष्ठापयति । दिवं यय (ऋ ८,

---

१. बर्हिर्द्वास् वि[1, 3] भा[1, 3] । २. °रमन्न° वि[1] । ३ सामा° भा[4] ।

---

*a*) ऐब्रा १,५,१; ५,२,५; शांश्रौ १८,१४,१ । *b*) तु. शब्रा ८, ६, २, ४ ; कौब्रा २९, ५ । *c*) तु. ऐब्रा १, ५, १; ५, ३, १; शब्रा ८, ६, २, ३ । *d*) तु. ऐब्रा १, ५, २; ५, ३, १; शांश्रौ १८,१७,७ ।

३४, १-१५) इति देवान् एवैतेन सूक्तेनैति। स प्रत्नथा कविवृधः (ऋ ८, ६३, ४-६) इति तृचम् अर्कवत् तेन समृद्धम्। गायत्र्युत्तमा तया समृद्धम्। शास इत्था महाँ असि (ऋ १०, १५२, १) इति महद्वत्। महद्वद् ध्येतद् अहः ॥ १५ ॥

अथैतं त्रिष्टुप्छतं[१] शंसति। इन्द्रस्यैवेतच् छन्दो यत् त्रिष्टुप् तद् एनं स्वेन छन्दसा समर्धयति। हैरण्यस्तूपीयं[a] च यातऊतीयं[b] च [२]बार्हतराथन्तरे बृहद्रथन्तरे हि पुरस्तात् कृते भवतः। सजनीयं[c] च अध्वर्यवो भरतेन्द्राय सोमम् (ऋ २,१४,१)[d] इति च ताः सप्तविंशतिर् ऋचो भवन्ति। सप्तविंशतिर् वै नक्षत्राणि। तन् नक्षत्रियां विराजम् आप्नोति। विश्वामित्रस्य[e] शंसेत्। विश्वामित्रो ह्येनद् अपश्यत्। [३]वामदेवस्य[f] शंसेद् वामं ह्येतद् देवानाम्। वसिष्ठस्य[g] शंसेद् [४]वसिष्ठं ह्येतद् देवानाम्। तत्र पुरस्ताद् उदुब्रह्मीयस्य[h] पदानुषङ्गाञ् छंसति। सर्वे वै कामा एतस्मिन् अन्तरुक्थे। तद् यथा व्रजे पशून् [५]अवसृज्याऽर्गलेषीके[i] परिव्ययेत्। एवम् एवैतैः पदानुषङ्गैः सर्वान् कामान् उभयतः परिगृह्याऽऽत्मन् धत्ते। अथो उदुब्रह्मीयस्याऽर्कवत्युत्तमा। तद् एतस्याह्नो रूपम्। त्रिः शस्तया परिदधाति। परिधायोक्थवीर्यं जपति। ऐकाहिकं पूर्वम्। प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एव। माहाव्रतिकम्[६] उत्तरम्। महद् असीति महद्वत्। महद्वद् ध्येतद् अहः ॥ १६ ॥

तद् [७]एतत् सकृच्छस्तायां[७] सूददोहसि, यावच्छस्त्रम् उपसर्जन्यां संख्यायमानायाम् ऋते तूष्णींशंसं बृहतीसहस्रं संपद्यते। तस्य वा एतस्य

---

१. °ष्टुप्श° वि[१]। २. °राथन्तरं भा[४]। ३. °देव्यस्य भा[१,३,४] वि[३], वि[१] [१मो हस्तः]। ४. वासि° भा[१,४] वि[३], भा[२,३] [२यो हस्तः]। ५. °र्गले° भा[२] वि[३]। ६. महा° भा[१-४]। ७-७. °तछकृछ° भा[४]।

---

a) तु. ऋ १, ३२। b) तु. ऋ ६, २५; कौब्रा २४, २; शांश्रौ १८, १६, ३।
c) तु. ऋ २, १२। d) तु. ऋ २, १४। e) तु. ऋ ३, ४३।
f) तु. ऋ ४, १६; ऐब्रा २, २, १; शांब्रा ४, १६। g) तु. ऋ ७, २४।
h) तु. ऋ ७, २३; शांश्रौ १८, १६, १०; २०, ६। i) अर्गल- + इषीका- इत्येतयोः द्वस.। उप. अर्थः? कीलक- इति K.।

बृहतीसहस्रस्य षट्त्रिंशद् अक्षराणां सहस्राणि भवन्ति। तावन्ति शतसंवत्सरस्याऽहानि [1]भवन्ति। तच् छतसंवत्सरस्याऽहान्या(नि[1], आ)प्नोति। अनुष्टुप्संपन्नम् उ हैके। वाग् वा एतद् अहः। वाग् अनुष्टुप्। वाग् ह सर्वाणि भूतानि। अथो वाग् इदं सर्वम् इति। बृहतीसंपन्नम् इति त्वेव स्थितम्। बार्हतो वा एष य एष तपति। तद् एनं स्वेन छन्दसा समर्धयति। त्रिर् एवाऽऽह्वयते। त्रयो वा इमे लोकाः। इमान् एव तल् लोकान् आप्नोति। ऐकाहिकी याज्या प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एव।

अननुवषट्-कृत[2] एव प्रेङ्खं श्रथ्नन्ति।[a] सग्रहम् एवाऽयं तं प्राङ् उपावरोहति प्रत्यङ्[3] प्रेङ्खफलकम् अपोहति। परामृशन् ग्रहं[4] जपति — यम् इमं प्रजयं प्राजैषं[5] तम् अन्वसानीति नेद् अस्मात् [6]प्रजयाद् आत्मानम्[6] अपादधानीति।

वैश्वकर्मणोऽतिग्राह्यः। प्राजापत्यं वा एतद् अहः। प्रजापतिर् विश्वकर्मा तद् एनं स्वेन रूपेण समर्धयति। [7]तद् धैतद् अहर्[7] इन्द्रोऽङ्गिरसे प्रोवाचाऽङ्गिरा दीर्घतमसे। तत उ ह दीर्घतमा दश पुरुषायुषाणि जिजीव। तद् अप्येतद् ऋषिर् आह दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे (ऋ १, १५८, ६) इति। तद् एतद् आयुष्कामस्य शस्त्रम् इति ह स्माऽऽह कौषीतकिः[b]। तद् य एवं विद्वान् एतद् अहः शंसति सर्वम् आयुर् अस्मिंल् लोक एति। आप्नोत्यमृतत्वम् अक्षितिं स्वर्गे लोके॥ १७॥

तत् सवितुर्वृणीमहे (ऋ ५, ८२, १-३) इति वैश्वदेवस्य प्रतिपद्। वृणीमह इति महद्वती। महद्वत् — महद्वद् ध्येतद् अहः। अद्या नो देव

---

१-१. वि[3] प्रभृ., K. च; नास्ति F.। २. अनु° भा[3]। ३. °त्यक् भा[2'3] वि[3] F.। ४. गृ° भा[3]। ५. °जैषीः भा[3], °जयिषम् भा[2]। ६-६. °जयामात्मा° भा[3], °जायादात्मा° वि[3] (१मो हस्तः)। ७-७. तद्धैततदह° वि[3]।

---

a) तु. शांश्रौ १८, २१, ५। b) तु. कौब्रा ४, १; ७।

सवितः (ऋ ५, ८२, ४) इत्यनुचरः। विश्वा वामानि धीमहि (ऋ ५,८२,६) इति महद्वत्। महद्वद् ध्येतद् अहः। तद् देवस्य सवितुर्वार्यं महत् (ऋ ४, ५३, १) इति सावित्रं महद्वत्। महद्वद् ध्येतद् अहः। ते हि द्यावापृथिवी [1]विश्वशंभुवः (ऋ १, १६०) इति[1] द्यावापृथिवीयम् उरुव्यचसा महिनी असश्चता (ऋ १, १६०, २) इति महद्वत्। महद्वद् ध्येतद् अहः। किम् उ श्रेष्ठः किं यविष्ठो न आजगन् (ऋ १, १६१) इत्यार्भवम्। न निन्दिम चमसं यो महाकुलः (ऋ १,१६१,१) इति महद्वत्। महद्वद् ध्येतद् अहः। अस्य वामस्य पलितस्य होतुः (ऋ १, १६४) इति सलिलं वैश्वदेवम्[a]। सलिलं ह्येतद् देवानाम्। ऐकाहिके निविदं दधाति। प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एव। ऐकाहिकं वैश्वानरीयम्। प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एव। प्रयज्यवो मरुतो भ्राजदृष्टयः (ऋ ५, ५५) इति मारुतम्। बृहन् महान्त उर्विया वि राजथ (ऋ ५,५५,२) इति बृहद्वत्[2]। महद्वत् — महद्वद् ध्येतद् अहः।

बळ् इत्था तद् वपुषे धायि दर्शतम् (ऋ १,१४१) इति जातवेदसीयं तस्य अस्ताव्यग्निः शिमीवद्भिर् अर्कैः (ऋ १, १४१, १३) इत्यर्कवत्युत्तमा। तद् एतस्याऽह्नो रूपम् इत्याग्निमारुतसूक्तानीति। एतस्याऽह्नः सूक्तानि। तद् [3]अग्निष्टोमः[b] संतिष्ठते। ब्रह्म वा अग्निष्टोमः[3]। ब्रह्मैतद् अहः। ब्रह्मण्येव तद् ब्रह्म प्रतिष्ठापयन्ति। तेऽमृतत्वम् आप्नुवन्ति य एतद् अहर् उपयन्ति य एतद् अहर् उपयन्ति ॥ १८ ॥

इति शाङ्खायनारण्यके द्वितीयोऽध्यायः ॥[c]

---

१-१. °भुवेति वि[3] भा[2,4]। २. वृद्धव° भा[3]। ३. अग्निः ष्टो° भा[2]।

---

*a*) तु. ऐब्रा ५,३,२। *b*) महाव्रतस्य प्रकृतिरयम्। *c*) इति द्वितीयोध्यायः समाप्तः वि[3]; महाव्रतब्राह्मणे द्वितीयोध्यायः समाप्तः भा[2]; इति शांखायनब्राह्मणे महाव्रते द्वात्रिंशोध्यायः समाप्तः भा[3]; इति कौषीतकिब्राह्मणे महाव्रतं नाम द्वात्रिंशत्तमोध्यायः भा[1]।

# अथ तृतीयोऽध्यायः

चित्रो ह वै गाङ्ग्यायनिर्[a] यक्ष्यमाण आरुणिं वव्रे । स ह पुत्रं श्वेतकेतुं [1]प्रजिघाय[b] याजयेति । तं हाऽभ्यागतं पप्रच्छ — गोतमस्य [2]पुत्र, अस्ति[2] संवृतं लोके यस्मिन् मा धास्यसि, अन्यतमो वाऽध्वा, तस्य मा लोके धास्यसीति । स होवाच — नाऽहम् एतद् वेद हन्ताऽऽचार्यं पृच्छानीति[3] । स ह पितरम् आसाद्य पप्रच्छ — इतीति माऽप्राक्षीत् कथं प्रतिब्रवाणीति । स होवाच — अहम् अप्येतन् न वेद । सदस्येव वयं स्वाध्यायम् अधीत्य हरामहे यन् नः परे ददति[4] । एह्युभौ गमिष्याव इति । स हि समित्पाणिश् चित्रं गाङ्ग्यायनिं प्रतिचक्रम उपायानीति । तं होवाच — [5]ब्रह्मार्होऽसि[5] गोतम[6] यो [7]न मानम्[7] उपागाः । एहि व्येव त्वा ज्ञपयिष्यामीति ॥ १ ॥[c]

स होवाच ये वै के चाऽस्माल् लोकात् प्रयन्ति चन्द्रमसम् एव ते सर्वे गच्छन्ति । तेषां प्राणैः पूर्वपक्ष आप्यायते[8] । तान् अपरपक्षेण प्रजनयति । एतद् वै स्वर्गस्य लोकस्य द्वारं यच् चन्द्रमाः । तं यः प्रत्याह तम् अतिसृजते । अथ यो न प्रत्याह तम् इह वृष्टिर् भूत्वा वर्षति । स इह कीटो वा पतङ्गो वा मत्स्यो वा शकुनिर् वा सिंहो वा वराहो वा [9]परश्वा[d] वा शार्दूलो वा पुरुषो वाऽन्यो वा तेषु तेषु स्थानेषु

---

१. °गाय° भा[4] [२यो ह्रस्वः], भा[5] । २-२. °त्रोस्ति भा[1,4,5] वि[3] ; °त्रोत्रासि भा[2] । ३. °मीति वि[3] भा[3] । ४. ददिति भा[1,4,5] । ५-५. ब्रह्मार्घो° भा[5] शं.; ब्रह्मग्राह्यसि कौउ. । ६. गौ° भा[2] कौउ. । ७-७. माम् [मूको. केचन] । ८. °प्यायते भा[1] । ९. °श्वान् भा[2,4,5] वि[1]; °स्वा भा[1] [प्रान्तपाठः] ।

---

a) गार्ग्यायणिः शं. वैसं. K. । b) प्र √हि + लिटि प्रपु१ [पा ७,३,५६] । c) तु. कौउ १,१ । d) °स्वा (प्र१ < °स्वन्- [तु. ऋ १०,८६,१८; अ६,७२,२ प्रभृ.]) इति पाभे. । °श्वा इति वावि. द्र. । अर्थः? वन्य-गर्दभ- इति BW., दंदशूकविशेष- वा वृश्चिकादि वेति शं., सर्प- इति ?K. ।

प्रत्याजायते यथाकर्म यथाविद्यम्। तम् आगतं पृच्छति, कोऽसीति। तं प्रतिब्रूयात् —

विचक्षणाद् ऋतवो रेत आभृतं
पञ्चदशात् प्रसूतात्[1] पित्र्यावतः।
तन् मा पुंसि कर्तर्येरयध्वं पुंसा कर्त्रा
मातरि [2]माऽऽसिषिञ्च[2] ॥

स जायमान उपजायमानो[3] द्वादश-
[4]त्रयोदशोपमासः[4] ।
द्वादशत्रयोदशेन पित्रा सं तद् विदेऽहं[5] प्रति तद् विदेऽहं[6]
तन् म ऋतवोऽमृत्यव आरभध्वम्[a] ॥

तेन सत्येन तेन[7] तपसा ऋतुर् अस्मि, आर्तवोऽस्मि।
कोऽसि त्वम् अस्मीति[8] तम् अतिसृजते ॥ २ ॥

स एतं देवयानं पन्थानम् आपद्याऽग्निलोकम् आगच्छति। स वायुलोकम्।[9] स वरुणलोकम्। स इन्द्रलोकम्। स प्रजापतिलोकम्। स ब्रह्मलोकम्। तस्य वा एतस्य ब्रह्मलोकस्याऽऽरो[b] ह्रदः, मुहूर्ता यष्टिहाः[c], विजरा[10] नदी, इल्यो वृक्षः, सालज्यं[11] संस्थानम्, अपराजितम्

---

१. °सुतात् भा[1,2,5]। २-२. मा निषिञ्च वि[3] भा[1,2,4,5] कौउ.; मा निषिञ्चत BC., मा निसिषिक्त निसा.। ३. नास्ति वि[3] भा[4,5]। ४-४. °दशो मासः वि[3] भा[4,5]। ५. विदे भा[4,5] वि[3] कौउ.। ६. °देयं भा[2]। ७. नास्ति भा[5]। ८. त्वमसीति वि[3] भा[1,2,5]। ९. स आदित्यलोकम्। भा[5] [अधिकः पाठः]। १०. विरजा भा[4]। ११. सालञ्जं वि[1], साल्लजं भा[2]।

---

*a*) "विचक्षणाद्···भृतम् अर्धमास्यं प्रसुतात् पित्र्यावतः।
तन्मा ··· °ध्वं पुंसः कर्तुर्मातर्यासिषिक्त ॥
स उपजायोपजायमानो द्वादशेन त्रयोदशोपमासः।
समु तद्विदे प्रतितद्विदेऽहं तं मा ऋतवोऽमृत आवयध्वम्" ॥ जैब्रा १,१८;५०।
"···मा निषिञ्च। स जाय उपजायमानो°" ॥ कौउ १,२।

*b*) अरि- + तस्येदमीयः प्र.। *c*) यष्टि- (√यज् + क्तिन्नन्ते संप्रसारणाभावे) + ह- (<√हन्), उस. (तु. Web. K.)। यत्तु कौउ १,४ प्रभृ. येष्टि° इति पेठुः तच्च वावि. द्र. (वैतु. शं. या [<यद्-] + इष्टि-ह° इत्याह तद्विमृश्यम्)।

आयतनम्, इन्द्रप्रजापती द्वारगोपौ, [1]विभु[a] प्रमितम्, विचक्षणाऽऽसन्दी, अमितौजाः पर्यङ्कः, प्रिया च मानसी, प्रतिरूपा च चाक्षुषी पुष्पाण्यादायाऽऽवयतो [2]वै च जगानि[b], अम्बाश् चाऽम्बायवीश् चाऽप्सरसः, अम्बया नद्यः। तम् इत्थंविद् आगच्छति। तं ब्रह्माऽऽह — अभिधाव त मम यशसा। विजरां[3] वा अयं नदीं प्रापत्। न वा अयं जरयिष्यतीति ॥ ३ ॥[c]

तं पञ्च शतान्यप्सरसां प्रतियन्ति — शतं फलहस्ताः, शतम् आञ्जनहस्ताः, शतं माल्यहस्ताः, शतं वासोहस्ताः, शतं चूर्णहस्ताः। तं ब्रह्माऽलङ्कारेणाऽलङ्कुर्वन्ति। स ब्रह्माऽलङ्कारेणाऽलङ्कृतो ब्रह्म विद्वान् ब्रह्माऽभिप्रैति। स आगच्छत्यारं[d] ह्रदम्। तं मनसाऽत्येति। तम् इत्वा संप्रतिविदो[e] मज्जन्ति। स आगच्छति मुहूर्तान् यष्टिहान्[d]। तेऽस्माद् अपद्रवन्ति। स आगच्छति विजरां[3] नदीम्। तां मनसैवाऽत्येति। तत् सुकृतदुष्कृते धुनुवाते[f]। तस्य प्रिया ज्ञातयः सुकृतम् उपयन्ति, अप्रिया दुष्कृतम्। तद् यथा रथेन धावयन् रथचक्रे पर्यवेक्षेत। एवम् अहोरात्रे पर्यवेक्षेत। एवं सुकृतदुष्कृते सर्वाणि च द्वन्द्वानि। स एष विसुकृतो दुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाऽभिप्रैति[4] ॥ ४ ॥[g]

स आगच्छतील्यं वृक्षम्। तं ब्रह्मगन्धः प्रविशति। स आगच्छति सालज्जं[5] संस्थानम्। तं ब्रह्मरसः प्रविशति। स आगच्छत्यपराजितम् आयतनम्। तं ब्रह्मयशः प्रविशति। स आगच्छतीन्द्रप्रजापती द्वारगोपौ। ताव् अस्माद् अपद्रवतः। स आगच्छति [1]विभु[a] प्रमितम्। तं ब्रह्मतेजः प्रविशति। स आगच्छति विचक्षणाम् आसन्दीम्। बृहद्-

१. विभुः भा[१,५] वि[१]। २. वि[३] भा[१]। वैरज° वि[१]; वैज° भा[५]। ३. विरजां भा[४]। ४. °ह्मेवा° भा[४]। ५. भा[४]। साल्लज्जं भा[१,२,५] वि[३], साल्लजं भा[२], सालज्यं कौउ. K.।

*a*) कौउ. वैसं. प्रभृ. उत्तरेण समस्तमित्याहुस्तच्चिन्त्यम्। *b*) [जगत्>जगन्ति>] जगानि इति वावि. द्र. (तु. कौउ. शं. K. च)। *c*) तु. कौउ १,३; वैसं.। *d*) नापू. पृष्ठे यक्र. *b,c* टि. द्र.। *e*) तु. ऐआ २,३,४; ६। *f*) यनि. [तु. मूको.] धुन्वाते [तु. K.] इत्यस्य वावि. इति मतं भवति (वैतु. कौउ. शं. धुनुते वा इति?)। *g*) तु. कौउ १,४।

रथन्तरे सामनी पूर्वौ पादौ । श्यैतनौधसे[1] चाऽपरौ । वैरूपवैराजे अनूच्ये । शाक्वररैवते तिरश्ची[a] । सा प्रज्ञा प्रज्ञया हि विपश्यति । स आगच्छत्यमितौजसं पर्यङ्कम् । स प्राणः । तस्य भूतं च भविष्यच् च पूर्वौ पादौ । श्रीश् चेरा चाऽपरौ । भद्रयज्ञायज्ञीये[2] शीर्षण्ये[b] । बृहद्रथन्तरे अनूच्ये । ऋचश् च सामानि च प्राचीनाऽऽतानानि । यजूंषि तिरश्चीनानि । सोमांऽशव उपस्तरणम् । [3]उद्गीथोऽपश्रयः[c] । श्रीर् उपबर्हणम् । तस्मिन् ब्रह्माऽऽस्ते । तम् इत्थंवित् पादेनैवाऽग्र आरोहति । तं ब्रह्मा पृच्छति — कोऽसीति । तं प्रतिब्रूयात् ॥ ५ ॥[d]

ऋतुर् अस्मि । आर्तवोऽस्मि । आकाशाद् योनेः संभूतो भार्यायै रेतः, संवत्सरस्य तेजोभूतस्य भूतस्याऽऽत्मा । भूतस्य भूतस्य त्वम् आत्माऽसि । यस् त्वम् असि सोऽहम् अस्मि । तम् आह — कोऽहम् अस्मीति । सत्यम् इति ब्रूयात् । किं तद् यत् सत्यम् इति । यद् अन्यद् देवेभ्यश्च प्राणेभ्यश् च तत् सत् । अथ यद् देवाश् च प्राणाश् च तत् सत्यम् । तद् एकया वाचाऽभिव्याहियते सत्यम्[e] इति । एतावद् इदं सर्वम् । इदं सर्वम् अस्मीत्येवैनं तद् आह । तद् [4]एतच् छ्लोकेनाऽभ्युक्तम्[4] ॥ ६ ॥[f]

यजूदरः[g] सामशिरा असाव् ऋङ्मूर्त्तिर् अव्ययः ।
स ब्रह्मेति विज्ञेय ऋषिर् ब्रह्ममयो महान् ॥ इति ।

---

१. शैत° वि[3] भा[2] । २. °सिये वि[3] भा[5] । ३. °थोऽपरश्च यः वि[1,3] भा[1,4,5] कौउ.; °थोपरश्रयः भा[2] [२यो हस्तः] । ४-४. एतश्लो° वि[3]; °तदृक्छलो° भा[2] ।

---

*a*) तिरश्च्ये इति K. प्रस्तावः (तु. Wh. अ १५,३,५ [तु. ऐब्रा ८, १२ जैब्रा २, २४]; वैतु. अनूची···तिरश्ची लाश्रौ ३,१२,२) । *b*) =शिरः (पादौ) इति (तु. K. प्रभृ.)। *c*) < °थः अपश्रयः (तु. सपा. अ १५, ३, ८ च पपा. च ; वैतु. वैसं. [आन. शं.] °थ उपश्रीः इति, Wh.K. च < °थः उपश्रयः इति छान्दसं रूपं कृत्वा यनि. इतीव)। अप° (=अवष्टम्भः [ ढासना इति भाषायाम् ]) । *d*) तु. कौउ १,५ । *e*) तु. बृउ २,३,१ प्रभृ. कौउ. च । *f*) तु. कौउ १,६ । *g*) < यजुः + उदर- इति। संधिरार्षः ।

तम् आह — केन मे पौंस्नानि नामान्याप्नोषीति । प्राणेनेति ब्रूयात् । केन नपुंसकानीति । मनसेति । केन स्त्रीनामानीति । वाचेति । केन गन्धान् इति । घ्राणेनेति । केन रूपाणीति । चक्षुषेति । केन शब्दान् इति । श्रोत्रेणेति । केनाऽन्नरसान् इति । जिह्वयेति । केन कर्माणीति । हस्ताभ्याम् इति । केन सुखदुःखे इति । शरीरेणेति । केनाऽऽनन्दं रतिं प्रजातिम्[1] इति । उपस्थेनेति । केनेत्या इति । पादाभ्याम् इति । केन धियो विज्ञातव्यं कामान् इति । प्रज्ञयैवेति ब्रूयात् । तम् आह — आपो[2] वै खलु मे लोकोऽयं तेऽसाविति । सा या ब्रह्मणो जितिर् या व्यष्टिः, तां जितिं जयति, तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ॥ ७ ॥[a]

इति शाङ्खायनारण्यके तृतीयोऽध्यायः[3] ॥

---

१. प्रजाम् भा[४] । २. °यो वि° भा[४,५] [२यो हस्तः] । ३. प्रथमोध्या° भा[१,५] ।

---

*a*) तु. कौउ १, ७ ।

# अथ चतुर्थोऽध्यायः

प्राणो ब्रह्मेति ह स्माऽऽह कौषीतकिः । तस्य वा एतस्य प्राणस्य ब्रह्मणो मनो दूतम्, चक्षुर् गोप्तृ, श्रोत्रं संश्रावयितृ, वाक् परिवेष्ट्री। स यो ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वेद दूतवान् भवति । यश् चक्षुर् गोप्तृ गोप्तृमान् भवति । यः श्रोत्रं संश्रावयितृ संश्रावयितृमान् भवति । यो वाचं परिवेष्ट्रीं परिवेष्ट्रीमान्[1] भवति । तस्मै वा एतस्मै प्राणाय ब्रह्मण एता देवता अयाचमानाय बलिं हरन्ति । एवं हैवाऽस्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद । तस्योपनिषन् न याचेद् इति । तद् यथा ग्रामं [2]भिक्षित्वाऽलब्ध्वोपविशेन्[2] नाऽहम् अतो दत्तम् अश्नीयाम् इति । त एवैनम् उपमन्त्रयन्ते ये पुरस्तात् प्रत्याचक्षीरन् । एष धर्मोऽयाचतो[3] भवति । अन्नदास् त्वेवैनम् उपमन्त्रयन्ते — ददाम त इति ॥ १ ॥[a]

प्राणो ब्रह्मेति ह स्माऽऽह पैङ्ग्यः । तस्य वा एतस्य प्राणस्य ब्रह्मणो वाक् परस्ताच् चक्षुर् आरुन्धते[b] । चक्षुः परस्ताच् छ्रोत्रम् आरुन्धते[b] । श्रोत्रं परस्तान् मन आरुन्धते[b] । मनः परस्तात् प्राण आरुन्धते[b] । तस्मै वा एतस्मै प्राणाय ब्रह्मण एता देवता अयाचमानाय बलिं हरन्ति । एवं हैवाऽस्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति । य एवं वेद तस्योपनिषन् न याचेद् इति । तद् यथा ग्रामं [2]भिक्षित्वा-ऽलब्ध्वोपविशेन्[2] नाऽहम् अतो दत्तम् अश्नीयाम् इति । त एवैनम्

---

१. °वेष्टृमा° भा[४,५] वि[१] । २-२. °लब्ध्वोप° भा[४,५] वि[१,३] ।
३. °याचि° वि[१] भा[१,५], भा[४] ।

---

*a*) तु. कौउ २, १ । *b*) श्नम्-श-विकरणयोः लटि प्रपु१ द्र. ( वैतु. शं. आरुन्धे [= यनि.] इति) ।

[उपमन्त्रयन्ते ये पुरस्तात् प्रत्याचक्षीरन् । एष धर्मोऽयाचतो[1] भवति । अन्नदास् त्वेवैनम् उपमन्त्रयन्ते — ददाम त इति ॥ २ ॥[a]

अथात एकधनावरोधनम् । य एकधनम् अभिध्यायात् पौर्णमास्यां वाऽमावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्र एतेषाम् एकस्मिन् पर्वण्यग्निम् उपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्य स्रुवेणाऽऽज्याहुतीर् जुहोति । वाङ् नाम देवताऽवरोधिनी[2] सा मेऽमुष्माद् इदम् अवरुन्ध्यात् तस्यै स्वाहा । प्राणो नाम देवताऽवरोधिनी[2] सा मेऽमुष्माद् इदम् अवरुन्ध्यात् तस्यै स्वाहा । चक्षुर् नाम देवताऽवरोधिनी[2] सा मेऽमुष्माद् इदम् अवरुन्ध्यात् तस्यै स्वाहा । श्रोत्रं नाम देवताऽवरोधिनी[2] सा मेऽमुष्माद् इदम् अवरुन्ध्यात् तस्यै स्वाहा । [3]मनो नाम देवताऽवरोधिनी[2] सा मेऽमुष्माद् इदम् अवरुन्ध्यात् तस्यै स्वाहा[3] । प्रज्ञा नाम देवताऽवरोधिनी[2] सा मेऽमुष्माद् इदम् अवरुन्ध्यात् तस्यै स्वाहेति । अथ धूमगन्धं [4]प्रजिघ्राया[b]-ऽऽज्यलेपनेनाऽङ्गान्यनुविमृज्य[5] वाचंयमोऽभिप्रव्रज्याऽर्थं ब्रूयात् दूतं वा प्रहिणुयात् । लभते हैव ॥ ३ ॥[c]

अथातो दैवः स्मरः । यस्य प्रियो बुभूषेद् यस्यै वा येषां वा यासां वैतेषाम् एवैकस्मिन् पर्वण्येतयैवाऽऽवृतैता आज्याहुतीर् जुहोति । वाचं ते मयि जुहोम्यसौ स्वाहा । प्राणं ते मयि जुहोम्यसौ स्वाहा । मयि चक्षुस्ते जुहोम्यसौ स्वाहा । श्रोत्रं ते मयि जुहोम्यसौ स्वाहा । मनस्ते मयि जुहोम्यसौ स्वाहा । प्रज्ञां ते मयि जुहोम्यसौ

---

१. °चि° भा[१,४,५] । २. °रोधनी वि[3] भा[१,२,४,५] कौउ. । ३-३. नास्ति भा[४,५] । ४. सर्वे मूको. कौउ. च यनि. एव (वैतु. वैसं. प्रतिघ्राय) । ५. °लेपेना° वि[3] [२यो हस्तः] ।

---

a) तु. कौउ २, २ । b) प्र √घ्रा > यङ्लुकि जिघ्रा + ल्यपि अभ्यासस्य इत्वं परत्र च ईत्वाभावः उसं. (पा ७, ४, ३१) इति (तु. वैप२) । c) तु. कौउ २, ३ ।

स्वाहेति । अथ धूमगन्धं [a]प्रजिघ्रायाऽऽज्यलेपेनाऽङ्गान्यनुविमृज्य वाचंयमोऽभिप्रव्रज्य संस्पर्शं जिगमिषेत् । अभिवाताद्[1] वा तिष्ठेत् संभाषमाणः । प्रियो हैव भवति । स्मरन्ते हैवाऽस्य ॥ ४ ॥[b]

अथातः सांयमनं प्रातर्दनम् । आन्तरम् अग्निहोत्रम् इत्याचक्षते । यावद् वै पुरुषो भाषते न तावत् प्राणितुं शक्नोति । प्राणं तदा वाचि जुहोति । यावद् वै पुरुषः प्राणिति न तावद् भाषितुं शक्नोति । वाचं तदा प्राणे जुहोति । एते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च संततं जुहोति । अथ या अन्या आहुतयोऽन्तवत्यस् ताः कर्ममय्यो हि भवन्ति । [2]तद् ध स्मैतत्[2] पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रुः ॥ ५ ॥[c]

उक्थं ब्रह्मेति ह स्माऽऽह शुष्कभृङ्गारः । तद् ऋग् इत्युपासीत । सर्वाणि हाऽस्मै भूतानि श्रैष्ठ्यायाऽभ्यर्च्यन्ते । तद् यजुर् इत्युपासीत । सर्वाणि हाऽस्मै भूतानि श्रैष्ठ्याय युज्यन्ते । तत् साम इत्युपासीत । सर्वाणि हाऽस्मै भूतानि श्रैष्ठ्याय संनमन्ते । तच् छ्रीर् इत्युपासीत । [3]तद् यश इत्युपासीत[3] । तत् तेज इत्युपासीत । तद् यथैतच् छ्रीमत्तमं यशस्वितमं तेजस्वितमम् इति शस्त्रेषु भवति । एवं हैव स सर्वेषु भूतेषु श्रीमत्तमो यशस्वितमस् तेजस्वितमो भवति य एवं वेद । तद् एतद् ऐष्टिकं कर्म यम् आत्मानम् अध्वर्युः संस्करोति । तस्मिन् यजुर्मयं प्रवयति[4] । यजुर्मय ऋङ्मयं होता । ऋङ्मये साममयम् उद्गाता । स एष त्रय्यै[5] विद्याया आत्मा । एष उ एवैतद् इन्द्रस्याऽऽत्मा भवति य एवं वेद ॥ ६ ॥[d]

अथातः सर्वजितः कौषीतकेस् त्रीण्युपासनानि भवन्ति । सर्वजिद् ध स्म कौषीतकिर् उद्यन्तम् आदित्यम् उपतिष्ठते यज्ञोपवीतं

१. अपि° कौउ. । २-२. तद्ध° वि³ । ३-३. नास्ति भा⁵ ।
४. प्रवदति वि³ भा² [१मो हस्तः] । ५. त्रय्यैव वि³ ।

*a*) तु. पृ. २४ b । *b*) तु. कौउ २,४ । *c*) तु. कौउ २,५ ।
*d*) तु. कौउ २,६ ।

कृत्वोदकम् आनीय त्रिः प्रसिच्योदकपात्रम् । 'वर्गोऽसि पाप्मानं मे वृङ्धि' इति। एतयैवाऽऽवृता मध्ये सन्तम्। 'उद्वर्गोऽसि पाप्मानं म उद्वृङ्धि' इति। एतयैवाऽऽवृताऽस्तं यन्तम्। 'संवर्गोऽसि पाप्मानं मे संवृङ्धि' इति। तद् यद् अहोरात्राभ्यां पापं करोति[1] सं तद् वृङ्क्ते। तथो एवैवं विद्वान् एतयैवाऽवृताऽऽदित्यम् उपतिष्ठते। यद् अहोरात्राभ्यां पापं करोति सं तद् वृङ्क्ते ॥ ७ ॥[a]

अथ मासिमास्यमावास्यायां वृत्तायां पश्चाच् चन्द्रमसं दृश्यमानम् उपतिष्ठेतैतयैवाऽऽवृता। हरिततृणे वा प्रत्यस्य —

यन् मे सुसीमं[b] हृदयं दिवि चन्द्रमसि श्रितम्।
मन्येऽहं मां तद् विद्वांसं माऽहं पुत्र्यम् अघं रुदम् ॥ इति।

न ह्यस्मात् पूर्वा[2] [c]प्रजा[3] प्रैतीति नु जातपुत्रस्य। अथाऽजात-पुत्रस्य—

आप्यायस्व समेतु त (ऋ १, ९१, १६), सं ते पयांसि सम् उ यन्तु वाजाः (ऋ १,९१,१८), यम् आदित्या अंशुम् आप्याययन्ति (तैसं २,३,५,३) इत्येतास् तिस्र ऋचो जपित्वा — 'माऽस्माकं प्राणेन प्रजया पशुभिर् आप्याययिष्ठाः। योऽस्मान् द्वेष्टि यं च वयं द्विष्मस् तस्य प्राणेन प्रजया पशुभिर् आप्याययस्वेत्यैन्द्रीम् आवृतम् आवर्त आदित्यस्याऽऽवृतम् अन्वावर्ते' इति दक्षिणं बाहुम् अन्वावर्तते ॥ ८ ॥[d]

अथ पौर्णमास्यां पुरस्ताच् चन्द्रमसं दृश्यमानम् उपतिष्ठेतै-तयैवाऽऽवृता। सोमो राजाऽसि विचक्षणः पञ्चमुखोऽसि प्रजापतिः।

---

१. अकरोत् इति मूको. पाठस्य दुरूहस्य सतः यनि. शोधः (तु. K. [भू XIV], वैसं.)।   २. पूर्वाः वि[1] भा[1,2,4,5]।   ३. प्रजाः वि[1] भा[1,4,5]।

---

*a*) तु. कौउ २,७।   *b*) तु. कौउ शं. K. प्रभृ. (वैतु. वैसं. 'सुसीम हृदयमधि चन्द्रमसि श्रितम्। तेनामृतत्वस्येशाने······पौत्रम्······।' आन. सुसमित् इति ?)।   *c*) प्रजा- [विडन्तं प्राति.] > -जाः [प्र१] इत्यवितथमिति वैसं. संकेतयेत्। *d*) तु. कौउ २, ८।

ब्राह्मणस् त एकं मुखं तेन मुखेन राज्ञोऽत्सि । तेन मुखेन माम् अन्नादं कुरु। राजा त एकं मुखं तेन मुखेन विशोऽत्सि। तेन मुखेन माम् अन्नादं कुरु। श्येनस् त एकं मुखं तेन मुखेन पक्षिणोऽत्सि। तेन मुखेन माम् अन्नादं कुरु। अग्निष् ट एकं मुखं तेन मुखेनेमं लोकम् अत्सि। तेन मुखेन माम् अन्नादं कुरु। त्वयि पञ्चमं मुखं तेन मुखेन सर्वाणि भूतान्यत्सि। तेन मुखेन माम् अन्नादं कुरु। 'माऽस्माकं प्राणेन प्रजया पशुभिर् अपक्षेष्ठाः। योऽस्मान् द्वेष्टि यं च वयं द्विष्मस् तस्य प्राणेन प्रजया पशुभिर् अपक्षीयस्वेति। दैवीम् आवृतम् आवर्त आदित्यस्याऽऽवृतम् अन्वावर्ते' इति दक्षिणं बाहुम् अन्वावर्तते॥९॥[a]

अथ [b]संवेक्ष्यन्[1] जायायै हृदयम् अभिमृशेत् —

यत् ते सुसीमे[2] हृदयं श्रितम् अन्तः प्रजापतौ।

तेनाऽमृतत्वस्येशाने मा त्वं पुत्र्यम् अघं नि गा इति॥

न ह्यस्याः[3] पूर्वा[4] [5]प्रजा[c] प्रैतीति॥ १०॥

अथ प्रोष्याऽऽयन् पुत्रस्य मूर्धानम् अभिजिघ्रेत् —

अङ्गाद् अङ्गात् संभवसि हृदयाद् अधि जायसे। आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् इति नामाऽस्य दधाति। अश्मा भव परशुर् भव, हिरण्यम् अस्तृतं भव। तेजो वै पुत्रनामाऽसि स जीव शरदः शतम् इति नामाऽस्य गृह्णाति। अथैनं परिगृह्णाति। येन प्रजापतिः प्रजाः पर्यगृह्णात् तद् अरिष्टयैतेन त्वा परिगृह्णामि, असौ इति। अथाऽस्य दक्षिणे कर्णे जपति— अस्मे प्रयन्धि मघवन्न् ऋजीषिन् (ऋ ३,३६,१०) इति। इन्द्र श्रेष्ठानि द्रविणानि

---

१. संवेश्य भा[1,2,4,5] वि[1,3]।  २. °षी° वि[1]; °शी° भा[1,4,5]।
३. °स्मात् भा[2] (२यो हस्तः)।  ४. पूर्वाः भा[1,2,4,5] वि[1] (२यो हस्तः)।
५. प्रजाः वि[1] भा[1,2,4,5]।

---

*a*) तु. कौउ २,९। *b*) तु. कौउ (शोधितः), वैप. वैसं. K. च। पक्षान्तरे 'संविश्यन्' इति, यद्वा 'संवेश्यन्' इति च K.। *c*) तु. नापू. ८मे खण्डे C टि.।

धेहि (ऋ २,२१,६) इति सव्ये। 'मा भेत्था मा व्यथिष्ठाः शतं शरद आयुषः। जीवस्व पुत्र ते नाम्ना मूर्धानम् अभिजिघ्रामि' इति त्रिर् अस्य मूर्धानम् अभिजिघ्रेत्। 'गवां त्वां हिंकारेणाऽभिहिंकरोमि' इति त्रिर् अस्य मूर्धानम् अभिहिंकुर्यात् ॥ ११ ॥[a]

अथातो दैवः परिमरः। एतद् वै ब्रह्म दीप्यते यद् अग्निर् ज्वलति। अथैतन् म्रियते यन् न ज्वलति। तस्याऽऽदित्यम् एव तेजो गच्छति वायुं प्राणः। एतद् वै ब्रह्म दीप्यते यद् आदित्यो दृश्यते। अथैतन् म्रियते यन् न दृश्यते। तस्य चन्द्रमसम् एव तेजो गच्छति वायुं प्राणः। एतद् वै ब्रह्म दीप्यते यच् चन्द्रमा दृश्यते। अथैतन् म्रियते यन् न दृश्यते। तस्य विद्युतम् एव तेजो गच्छति वायुं प्राणः। एतद् वै ब्रह्म दीप्यते यद् विद्युद् विद्योतते। अथैतन् म्रियते यन् न विद्योतते। तस्या दिश एव तेजो गच्छति वायुं प्राणः। ता वा एताः सर्वा देवता वायुम् एव प्रविश्य वायौ[1] [2]मृत्वा न[2] मृच्छन्ते। तस्माद् एव पुनरुदीरते। इत्यधिदैवम्। अथाऽध्यात्मम् ॥ १२ ॥

एतद् वै ब्रह्म दीप्यते यद् वाचा वदति। अथैतन् म्रियते यन् न वदति। तस्य चक्षुर् एव तेजो गच्छति। प्राणं प्राणः। एतद् वै ब्रह्म दीप्यते यच् चक्षुषा पश्यति। अथैतन् म्रियते यन् न पश्यति। तस्य श्रोत्रम् एव तेजो गच्छति। प्राणं प्राणः। एतद् वै ब्रह्म दीप्यते यच् छ्रोत्रेण शृणोति। अथैतन् म्रियते यन् न शृणोति। तस्य मन एव तेजो गच्छति। प्राणं प्राणः। एतद् वै ब्रह्म दीप्यते यन् मनसा ध्यायति। अथैतन् म्रियते यन् न ध्यायति। तस्य प्राणम् एव तेजो गच्छति। प्राणं प्राणः। ता वा एताः सर्वा देवताः प्राणम् एव प्रविश्य प्राणे [2]मृत्वा न[2] मृच्छन्ते। तस्माद् एव पुनर् उदीरते। तद् यद् इह वा एवं विद्वांसम् उभौ पर्वताव् अभिप्रवर्तेयातां

---

१. वायु वि[3]। २-२. मृत्वान्न वि[1] [१२ अध्याये], भा[4]। वैसं. सृप्ता न इति ?

---

*a*) तु. कौउ २,११।

दक्षिणश्चोत्तरश् च तुस्तूर्षमाणौ न हैनं स्तृण्वीयाताम् । अथ य एनं द्विषन्ति यांश् च स्वयं द्वेष्टि त एवैनं परिम्रियन्ते ॥ १३ ॥[a]

अथातो निःश्रेयसादानम् । एता ह वै देवता अहंश्रेयसे[b] विवदमाना अस्माच् छरीराद् उच्चक्रमुः । [1]तद् ध पपात, शुष्कं[1] दारुभूतं शिश्ये । अथैनद् वाक् प्रविवेश । तद् वाचा वदच् छिश्य एव । अथैनच् चक्षुः प्रविवेश । तद् वाचा वदच् चक्षुषा पश्यच् छिश्य एव । अथैनच् छ्रोत्रं प्रविवेश । तद् वाचा वदच् चक्षुषा पश्यच् छ्रोत्रेण शृण्वच् छिश्य एव । अथैतन् मनः प्रविवेश । तद् वाचा वदच् चक्षुषा पश्यच् छ्रोत्रेण शृण्वन् मनसा ध्यायच् छिश्य एव । अथैनत् प्राणः प्रविवेश ।[2] तत् तत एव समुत्तस्थौ । ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा प्राणम् एव प्रज्ञात्मानम् अभिसंभूय सहैवैतैः सर्वैर् अस्माच् छरीराद् उच्चक्रमुः । ते वायु प्रतिष्ठा आकाशात्मानः स्वर् ईयुः । तथो एवैवं विद्वान् प्राणे निःश्रेयसं विदित्वा प्राणम् एव प्रज्ञात्मानम् अभिसंभूय सहैवैतैः सर्वैर् अस्माच् छरीराद् उत्क्रामति । स [3]वायुप्रतिष्ठ आकाशात्मा स्वर् एति । स तद् गच्छति यत्रैते देवाः । तत् प्राप्य यद् अमृता देवाः । तद् अमृतो भवति य एवं वेद ॥ १४ ॥[c]

अथातः पितापुत्रीयं संप्रदानम्[d] [4]इति चाऽऽचक्षते[4] । पिता पुत्रं प्रेष्यन्न् आह्वयति । नवैस् तृणैर् अगारं संस्तीर्याग्निम् उपसमाधायो[5]-दकुम्भं सपात्रम् उपनिधायाहतेन वाससा संप्रच्छन्नः पिता शेते ।

---

१-१. तद्वाक् वि[1,3] भा[4] ; तद्वाक्यैद्वा भा[5] ; तद्वा भा[1] । तद्वाऽप्राणत् शुष्कं कौउ. K. । २. नास्ति वि[3] । ३. वायुः प्र° वि[1], वि[3] [प्रथमो हस्तः], भा[1,2] । ४-४. इत्याच° भा[5], वि[3] [प्रथमो हस्तः] । ५. °पस्माधा° भा[4] ।

---

*a*) तु. सपा. कौउ. २,१३; शांआ ५,३; ६,२-७ । *b*) सपा. शब्रा १४,६, २,७ °श्रेयस्->यनि. इति कौउ. शं. प्रभृ. (तु. बृ ६,१,७ यनि. इति, छां ५,१,६ तु. °यसि इति पाभे.; वैतु. वैसं. Pw. प्रभृ. -यस->-से [सप्त१ इति] ? *c*) तु. कौउ २,१४ । *d*) =संप्रत्तिः (तु. बृ १,५,१०-२०) ।

एत्य पुत्र उपरिष्टाद् अभिनिपद्यत[1] इन्द्रियैर् इन्द्रियाणि संस्पृश्य । [2]अपि वाऽस्मा[2] आसीनायाऽभिमुखायैव संप्रदद्यात् । अथाऽस्मै संप्रयच्छति । वाचं मे त्वयि दधानीति पिता । वाचं ते मयि दध इति पुत्रः । प्राणं मे त्वयि दधानीति पिता । प्राणं ते मयि दध इति पुत्रः । चक्षुर्मे त्वयि दधानीति पिता । चक्षुस्ते मयि दध इति पुत्रः । श्रोत्रं मे त्वयि दधानीति पिता । श्रोत्रं ते मयि दध इति पुत्रः । अन्नरसान् मे त्वयि दधानीति पिता । अन्नरसांस् ते मयि दध इति पुत्रः । कर्माणि मे त्वयि दधानीति पिता । कर्माणि ते मयि दध इति पुत्रः । सुखदुःखे मे त्वयि दधानीति पिता । सुखदुःखे ते मयि दध इति पुत्रः । आनन्दं रतिं प्रजातिं मे त्वयि दधानीति पिता । आनन्दं रतिं प्रजातिं ते मयि दध इति पुत्रः । इत्यां मे त्वयि दधानीति पिता । इत्यां ते मयि दध इति पुत्रः । धियो विज्ञातव्यं कामान् मे त्वयि दधानीति पिता । धियो विज्ञातव्यं कामांस् ते मयि दध इति । मनो मे त्वयि दधानीति पिता । मनस् ते मयि दध इति पुत्रः । प्रज्ञां ते त्वयि दधानीति पिता । प्रज्ञां ते मयि दध इति पुत्रः । [3]यद् उ वा[3] उपाभिगदः[4] स्यात् समासेनैव ब्रूयात् । प्राणान् मे त्वयि दधानीति पिता । प्राणांस् ते मयि दध इति पुत्रः । अथ दक्षिणावृद् उपनिष्क्रामति । तं पिताऽनुमन्त्रयते । यशो ब्रह्मवर्चसं कीर्तिस् त्वा जुषताम् इति । अथेतरः सव्यम् अन्वंसम् अभ्यवेक्षते । पाणिनाऽन्तर्धाय वसनान्तेन वा प्रच्छाद्य स्वर्गाँल् लोकान् कामान् आप्नुहीति । स यद्यगदः स्यात् पुत्रस्यैश्वर्ये पिता वसेत् । परि वा व्रजेत् । यद्यु वै प्रेयात् तथैवैनं समापयेयुः । यथा समापयितव्यो भवति यथा समापयितव्यो भवति ॥ १५ ॥

[5]इति शाङ्खायनारण्यके चतुर्थोऽध्यायः ॥[5]

---

१. °निष्पद्य° भा[2] ।  २-२. पितापि वा° वि[3] ।  ३-३. यद्यु वा वि[1] ।
४. °पाधिग° भा[2,4] वि[1] ।  ५-५. इत्यारण्यके चतुर्थोऽध्यायः भा[1,4] ।

# अथ पञ्चमोऽध्यायः

प्रतर्दनो ह वै दैवोदासिर् इन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च। तं हेन्द्र उवाच प्रतर्दनं वरं वृणीष्वेति। स होवाच प्रतर्दनः — त्वम् एव मे वृणीष्व[1] यं त्वं मनुष्याय हिततमं मन्यस इति। तं हेन्द्र उवाच — न वै [a]वरोऽवरस्मै[2] वृणीते। त्वम् एव वृणीष्वेति। अवरो वै किल [b]मेति[3] होवाच प्रतर्दनः। अथो खल्विन्द्रः सत्याद् एव नेयाय। सत्यं हीन्द्रः। तं हेन्द्र उवाच — माम् एव विजानीहि। एतद् एवाऽहं मनुष्याय हिततमं मन्ये यो मां विजानीयात्। त्रिशीर्षाणं त्वाष्ट्रम् अहनम्[4]। अरुर्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्[5]। बह्वीः संधा अतिक्रम्य दिवि प्रह्लादीयान् अतृणहम्[c] अन्तरिक्षे, पौलोमान् पृथिव्यां कालखञ्जा[6]। तस्य मे तत्र न लोमचनाऽमीयत। स यो मां वेद न ह वै तस्य केन च कर्मणा लोको मीयते। न स्तेयेन न भ्रूणहत्यया न मातृवधेन न पितृवधेन। नाऽस्य पापं चकृषो मुखान् नीलं [7]व्येतीति[d] ॥ १ ॥[e]

स होवाच प्राणोऽस्मि प्रज्ञात्मा। तं माम् आयुर् अमृतम् इत्युपास्व[8]। आयुः प्राणः। प्राणो वा आयुः। यावद् ह्यस्मिन्

---

१. वरं वृ° वि१। २. परोऽपरस्मै इति B. K.; परः परस्मै इति Sch. वरं परस्मै इति कौउ.। ३. **मूको.** [तु. **कौउ.**]। ४. अहनत् **भा४ आन.**। ५. °च्छन् **भा४ वि१**। ६. कालकांजा° **भा२**, कारखंजा° **भा४ वि१**। ७. वेती° **भा१-५**, वेत्ती° **वि१**। ८. °पास्स्व **वैसं. वि२ भा१**।

---

*a*) 'न वरो यस्मात् सः' इति [तु. K.]। *b*) छन्दस्तः <मे इति **वैसं.**। म° इत्येव K. पाठः। *c*) √तृह् + **रुधा. लङि उपु१ व्र.** (तु. कौउ शं. K. [वैतु. वैसं. प्रभृ. **अतृणम्। अहम् इति ?**]) । *d*) <वि√इ इति (तु. तैसं ३,१,१,२ कौउ. [**प्रान्ते शोधितः पाठश्च**]। *e*) **तु.** कौउ ३,१।

शरीरे प्राणो वसति तावद् आयुः। प्राणेन ह्येवाऽस्मिँल् लोकेऽमृतत्वम् आप्नोति। प्रज्ञया सत्यं संकल्पम्। स यो माम् आयुर् अमृतम् इत्युपास्ते। सर्वम् आयुर् अस्मिँल् लोक एति। आप्नोत्यमृतत्वम् अक्षितिं स्वर्गे लोके। तद्धैक आहुर् एकभूयं वै प्राणा गच्छन्तीति। न हि कश्चन शक्नुयात् सकृद् वाचा नाम प्रज्ञापयितुं चक्षुषा रूपं श्रोत्रेण शब्दं मनसा ध्यातुम्। एकभूयं वै प्राणा भूत्वैवैकैकम् एतानि सर्वाणि प्रज्ञापयन्तीति। वाचं वदन्तीं सर्वे प्राणा अनुवदन्ति। चक्षुः पश्यत् सर्वे प्राणा अनुपश्यन्ति। श्रोत्रं शृण्वत् सर्वे प्राणा अनुशृण्वन्ति। मनो ध्यायत् सर्वे प्राणा अनुध्यायन्ति। प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्ति। एवम् उ हैतद् इति हेन्द्र उवाच। अस्ति त्वेव प्राणानां निःश्रेयसम् इति ॥ २ ॥[a]

जीवति वागपेतः। मूकान् हि पश्यामः। जीवति चक्षुरपेतः। अन्धान् हि पश्यामः। जीवति श्रोत्रापेतः। बधिरान् हि पश्यामः। जीवति मनोऽपेतः। बालान् हि पश्यामः। जीवति बाहुच्छिन्नः। जीवत्यूरुच्छिन्नः। इत्येवं हि पश्याम इति। अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति। तस्माद् एतद् एवोक्थम् उपासीतेति[b]। सैषा प्राणे सर्वाप्तिः। यो वै प्राणः सा प्रज्ञा। या वा प्रज्ञा स प्राणः। [1]तस्यैषैव दृष्टिः। एतद् विज्ञानम्। यत्रैतत् पुरुषः सुप्तः स्वप्नं न कंचन पश्यति। अथास्मिन् प्राण एवैकधा भवति। तद् एनं वाक् सर्वैर् नामभिः सहाप्येति। चक्षुः सर्वै रूपैः सहाप्येति। श्रोत्रं सर्वैः शब्दैः सहाप्येति। मनः सर्वैर् ध्यानैः[2] सहाप्येति। स यदा प्रतिबुध्यते। यथाऽग्नेर् ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्

१. सह ह्येतावस्मिन् शरीरे वसतः। सहोत्क्रामतः वैसं. [अधिकः पाठः]।
२. °तैः भा[४] वि[२]।

*a*) तु. कौउ ३, २। *b*) तु. ऐआ २,१,४; बृ ५,१३,१; शब्रा १,६,२,८; १०,६,२,१०।

एवम् एवैतस्माद् आत्मनः प्राणा यथायतनं विप्रतिष्ठन्ते । प्राणेभ्यो देवाः । देवेभ्यो लोकाः । स एष प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति । तस्माद् एतद् एवोक्थम् उपासीतेति[a] । सैषा प्राणे सर्वाप्तिः । यो वै प्राणः सा प्रज्ञा । या वा प्रज्ञा स प्राणः । तस्यैषैव सिद्धिः । एतद् विज्ञानम् । यत्रैतत् पुरुष आर्तो मरिष्यन्न् आबल्यम् [1]एत्य संमोहम् एति[1] । तम् आहुः — उदक्रमीच् चित्तम् । न शृणोति । न पश्यति । न वाचा वदति । न ध्यायति । अथास्मिन् प्राण एवैकधा भवति । तद् एनं वाक् सर्वैर् नामभिः सहाप्येति । चक्षुः सर्वैः रूपैः सहाप्येति । श्रोत्रं सर्वैः शब्दैः सहाप्येति । मनः सर्वैर् ध्यातैः[2] सहाप्येति । स यदाऽस्माच् छरीराद् उत्क्रामति सहैवैतैः सर्वैर् उत्क्रामति ॥ ३ ॥[b]

वाग् एवास्मिन् सर्वाणि नामान्यभिविसृज्यन्ते । वाचा सर्वाणि नामान्याप्नोति । प्राण एवास्मिन् सर्वे गन्धा अभिविसृज्यन्ते । प्राणेन सर्वान् गन्धान् आप्नोति । चक्षुर् एवास्मिन् सर्वाणि रूपाण्यभिविसृज्यन्ते । चक्षुषा सर्वाणि रूपाण्याप्नोति । श्रोत्रम् एवास्मिन् सर्वे शब्दा अभिविसृज्यन्ते । श्रोत्रेण सर्वाञ् छब्दान् आप्नोति । मन एवास्मिन् सर्वाणि ध्यातान्यभिविसृज्यन्ते[3] । मनसा सर्वाणि ध्यातान्याप्नोति[3] । सह ह्येतावस्मिञ् छरीरे वसतः सहोत्क्रामतः । अथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति[4] । तद् व्याख्यास्यामः ॥ ४ ॥[c]

वाग् एवास्या एकम् अङ्गम् उदूळ्हम् । तस्यै नाम परस्तात् प्रतिविहिता भूतमात्रा । प्राण एवास्या एकम् अङ्गम् उदूळ्हम् । तस्य गन्धः परस्तात् प्रतिविहिता भूतमात्रा । चक्षुर् एवास्या एकम् अङ्गम् उदूळ्हम् । तस्य रूपं परस्तात् प्रतिविहिता भूतमात्रा । श्रोत्रम् एवास्या

---

१. न्येत्य…न्येति इति वैसं. । २. सर्वं मूको. । °नैः कौउ. । ३. ध्याना° कौउ. । ४. °वन्तीति भा[115] ।

---

*a*) तु. ऐआ २, १, ४ बृ ५, १३, १ शब्रा १,६,२,८ ; १०,६, ३, १० । *b,c*) यक्र. तु. कौउ ३,३; ४ ।

एकम् अङ्गम् उदूळ्हम् । तस्य शब्दः परस्तात् प्रतिविहिता भूतमात्रा । जिह्वैवास्या एकम् अङ्गम् उदूळ्हम् । तस्या अन्नरसः परस्तात् प्रतिविहिता भूतमात्रा । हस्तावेवास्या एकम् अङ्गम् उदूळ्हम् । तयोः कर्म परस्तात् प्रतिविहिता भूतमात्रा । शरीरमेवास्या एकम् अङ्गम् उदूळ्हम् । तस्य सुखदुःखे परस्तात् प्रतिविहिता भूतमात्रा । उपस्थ एवास्या एकम् अङ्गम् उदूळ्हम् । तस्याऽऽनन्दो रतिः प्रजातिः परस्तात् प्रतिविहिता भूतमात्रा । पादावेवास्या एकम् अङ्गम् उदूळ्हम् । तयोर् इत्याः परस्तात् प्रतिविहिता भूतमात्रा । मन एवास्या एकम् अङ्गम् उदूळ्हम् । तस्य धीः कामाः परस्तात् प्रतिविहिता भूतमात्रा ॥ ५ ॥[a]

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति । प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान् गन्धान् आप्नोति । प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति । प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वाञ् छब्दान् आप्नोति । प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वान् रसान् आप्नोति । प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति । प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति । प्रज्ञयोपस्थं समारुह्योपस्थेनाऽऽनन्दं रतिं प्रजातिम् आप्नोति । प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति । प्रज्ञया मनः समारुह्य मनसा सर्वाणि [1]ध्यातान्याप्नोति[1] ॥ ६ ॥[b]

न हि प्रज्ञापेता वाङ् नाम किंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूद् इत्याह । नाहम् एतन् नाम प्राज्ञासिषम् इति । न हि प्रज्ञापेतः प्राणो गन्धं कंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूद् इत्याह । नाहम् एतं गन्धं प्राज्ञासिषम् इति । न हि प्रज्ञापेतं चक्षू रूपं किंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूद् इत्याह । नाहम् एतद् रूपं प्राज्ञासिषम् इति । न हि प्रज्ञापेतं श्रोत्रं शब्दं कंचन

---

१. ध्याना° कौउ. ।

---

*a,b*) तु. शक. कौउ ३, ५ ; ६ ।

प्रज्ञापयेत् । अन्यत्र मे मनोऽभूद् इत्याह । नाहम् एतं शब्दं प्राज्ञासिषम् इति । न हि प्रज्ञापेता जिह्वाऽन्नरसं कंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूद् इत्याह । नाहम् एतम् अन्नरसं प्राज्ञासिषम् इति । न हि प्रज्ञापेतौ हस्तौ कर्म किंचन प्रज्ञापयेताम्[1] । अन्यत्र नौ मनोऽभूद् इत्याहतुः । नाऽऽवाम् एतत् कर्म प्राज्ञासिष्वेति । न हि प्रज्ञापेतं शरीरं न सुखं न दुःखं किंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूद् इत्याह । नाहम् एतं न सुखं न दुःखं प्राज्ञासिषम् इति । न हि प्रज्ञापेत उपस्थ आनन्दं न रतिं न प्रजातिं कांचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूद् इत्याह । नाहम् एतम् आनन्दं न रतिं प्रजातिं प्राज्ञासिषम् इति । न हि प्रज्ञापेतौ पादावित्यां कांचन प्रज्ञापयेताम् । अन्यत्र नौ मनोऽभूद् इत्याहतुः । नाऽऽवाम् एताम् इत्यां प्राज्ञासिष्वेति । न हि प्रज्ञापेता धीः कांचन सिध्येत् , न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥[a]

न वाचं विजिज्ञासीत । वक्तारं विद्यात् । न गन्धं विजिज्ञासीत । घ्रातारं विद्यात् । न रूपं विजिज्ञासीत । द्रष्टारं[2] विद्यात् । न शब्दं विजिज्ञासीत । श्रोतारं विद्यात् । नान्नरसं विजिज्ञासीत । अन्नरसस्य विज्ञातारं विद्यात् । न कर्म विजिज्ञासीत । कर्तारं विद्यात् । न सुखदुःखे विजिज्ञासीत । सुखदुःखयोर् विस्तारं विद्यात् । नानन्दं न रतिं न प्रजातिं विजिज्ञासीत । आनन्दस्य रतेः प्रजातेर् विज्ञातारं विद्यात् । नेत्यां विजिज्ञासीत । एतारं विद्यात् । न मनो विजिज्ञासीत । मन्तारं विद्यात् । ता वा एता दशैव भूतमात्रा[3] अधिप्रज्ञम् । दश प्रज्ञामात्रा अधिभूतम् । यद् धि भूतमात्रा न स्युर् न प्रज्ञामात्राः स्युः । यद् वा प्रज्ञामात्रा न स्युर् न भूतमात्राः स्युः । न ह्यन्यतरतो रूपं किंचन सिध्येत् । नो एतन् नाना । तद् यथा रथस्याऽरेषु नेमिर् अर्पितः[3] । नाभावरा अर्पिताः । एवम्

---

१. प्रज्ञापयेयाताम् भा[1,2,3,4,5] वि[2] कौउ. । २. रूपविद्यं वैसं. शं. । ३. नास्ति भा[5] ।

---

*a*) तु. कौउ ३, ७ ।

एवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः । प्रज्ञामात्राः प्राणेऽर्पिताः । स एष प्राण एव प्रज्ञात्मानन्तोऽजरोऽमृतो न साधुना कर्मणा भूयान् भवति नो एवासाधुना कनीयान् । एष ह्येव साधु कर्म कारयति तं यम् एभ्यो लोकेभ्य उन्निनीषते । एष उ [1]एवासाधु कर्म कारयति तं[1] यम् अधो निनीषते । एष लोकपालः । एष लोकाधिपतिः । एष लोकेशः । स म आत्मेति विद्यात् स म आत्मेति विद्यात् ॥ ८ ॥[a]

इति शाङ्खायनारण्यके पञ्चमोऽध्यायः[2] ॥

---

१-१. वि[2] [२यो हस्तः] । नास्ति भा[1,2,5] । °धुस्तं वि[2] । २. °तीयोऽध्यायः वि[2] ।

---

a) कौउ ३, ८ ।

# अथ षष्ठोऽध्यायः[a]

अथ ह वै गार्ग्यो बालाकिर् अनूचानः [1]संस्पष्ट[b] आस । सोऽवसद् उशीनरेषु [2]सोऽवसन् मत्स्येषु[2] कुरुपञ्चालेषु काशिविदेहेष्विति । स हाऽजातशत्रुं काश्यम्[3] आव्रज्योवाच — ब्रह्म ते ब्रवाणीति । तं होवाचाऽजातशत्रुः — सहस्रं [4]दद्मि त[4] इत्येतस्यां वाचि । जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥[c]

आदित्ये बृहत्, चन्द्रमस्यन्नम्, विद्युति सत्यम्, स्तनयित्नौ शब्दः, वायाविन्द्रो वैकुण्ठः, आकाशे पूर्णम्, अग्नौ[4] विषासहिः, अप्सु[5] तेजः । इत्यधिदैवतम्[6] । अथाध्यात्मम् — आदर्शे प्रतिरूपः, छायायां द्वितीयः, प्रतिश्रुत्कायाम् असुरिति, शब्दे मृत्युः, स्वप्ने यमः, शरीरे प्रजापतिः, दक्षिणेऽक्षिणि[7] वाचः, सव्येऽक्षिणि[8] सत्यस्य ॥ २ ॥

स होवाच बालाकिः — य एवैष आदित्ये पुरुषस् तम् एवाहम् उपास इति । तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः । [9]बृहन् पाण्डरवासा[9] अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा अहम्

---

१. संस्पृष्ट भा[5] [आन. वैसं.], संस्पृष्ठ भा[4] । २-२. कौउ. । सवसम° भा[2], सवसन्म° भा[1,4,5] वि[2] । ३. कास्यम् भा[2] । ४-४. ददत वि[2] भा[2,4], दद्मस्त बृ. कौउ. । ५. इत्यप्सु वि[2] भा[1,2,4,5] कौउ. । ६. °दैवम् भा[1] । ७. अक्षिण भा[4] । ८. अक्षीणि भा[4] । ९-९. शं. K. वैसं.; बृहत्पाण्ड° मूको. कौउ. ।

---

*a*) आनुपूर्व्येण कौउ. [४,१-२०], बृ २,१,१-२० इत्यनेन प्रायः समानपाठः (तु. छां ६,२,१ प्रभृ.) । *b*) प्रथितकीर्तिरिति शं. कौउ. K. च । < सम् √स्पश् (ज्ञाने) । *c*) तु. ऐब्रा ८,१४ ।

एतम् उपास इति। स यो हैतम् एवम् उपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा भवति ॥ ३ ॥

स होवाच बालाकिः — य एवैष चन्द्रमसि पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः। अन्नस्याऽऽत्मेति वा अहम् एतम् उपास इति। स यो हैतम् एवम् उपास्तेऽन्नस्याऽऽत्मा भवति ॥ ४ ॥

स होवाच बालाकिः—य एवैष विद्युति पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः। सत्यस्याऽऽत्मेति वा अहम् उपास इति। स यो हैतम् एवम् उपास्ते सत्यास्याऽऽत्मा भवति ॥ ५ ॥

स होवाच बालाकिः — य एवैष स्तनयित्नौ पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः। शब्दस्याऽऽत्मेति वा अहम् एतम् उपास इति। स यो हैतम् एवम् उपास्ते शब्दस्याऽऽत्मा भवति ॥ ६ ॥

स होवाच बालाकिः — य एष वायौ पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः। इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहम् एतम् उपास इति। स यो हैतम् एवम् उपास्ते जिष्णुर् ह वा [1]अपराजिष्णुर्[a] [2]अन्यतस्त्यजायी[b] भवति ॥ ७ ॥

स होवाच बालाकिः — य एवैष आकाशे पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः।

---

१. °जयिष्णु° भा[४,५] कौउ.। २. °जायै भा[४]।

---

*a*) उप. √जि + क्स्नुः प्र. (पा ३,२,१३९)। *b*) <अन्यतस्-त्य- [वैरिन्-] + √जि।

पूर्णम् अप्रवर्ति ब्रह्मेति वा अहम् एतम् उपास इति। स यो हैतम् एवम् उपास्ते पूर्यते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ ८॥

स होवाच बालाकिः—य एवैषोऽग्नौ पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः—मा मैतस्मिन् संवादयिष्ठाः। विषासहिरिति वा अहम् एतम् उपास इति। स यो हैतम् एवम् उपास्ते [1]विषासहिर् हैवान्येषु[1] भवति ॥ ९ ॥

स होवाच बालाकिः—य एवैषोऽप्सु पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः—मा मैतस्मिन् संवादयिष्ठाः। तेजस आत्मेति वा अहम् एतम् उपास इति। स यो हैतम् एवम् उपास्ते तेजस आत्मा भवति। इत्यधिदैवतम्। अथाध्यात्मम् ॥ १० ॥

स होवाच बालाकिः—य एवैष आदर्शे पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः—मा मैतस्मिन् संवादयिष्ठाः। प्रतिरूप इति वा अहम् एतम् उपास इति। स यो हैतम् एवम् उपास्ते प्रतिरूपो हैवास्य प्रजायाम् आजायते नाप्रतिरूपः ॥ ११ ॥

स होवाच बालाकिः—य एवैष च्छायायां पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः—मा मैतस्मिन् संवादयिष्ठाः। द्वितीयोऽनपग इति वा अहम् एतम् उपास इति। स यो हैतम् एवम् उपास्ते विन्दते द्वितीयात्[2]। द्वितीयवान् हि भवति ॥ १२ ॥

स होवाच बालाकिः—य एवैष प्रतिश्रुत्कायां पुरुषस् तम् एवाहम् उपास इति। तं होवाचाऽजातशत्रुः—मा मैतस्मिन् संवादयिष्ठाः। असुर् इति वा अहम् एतम् उपास इति। स यो हैतम् एवम् उपास्ते न पुरा कालात् संमोहम् एति ॥ १३ ॥

---

१-१. °हिर्वा° वि[2]। °हिर् ह वा अन्येषु कौउ.। २. भा[1] [२यो हस्तः], कौउ. शं., भा[2,4,5] K. [टि.]; °या वि[2]।

स होवाच बालाकिः — य एवैष शब्दे पुरुषस् तम् एवाहम् उपास इति । तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः । मृत्युर् इति वा अहम् एतम् उपास इति । स यो हैतम् एवम् उपास्ते न पुरा कालात् प्रैतीति ॥ १४ ॥

स होवाच बालाकिः — येनैतत्[1] पुरुषः सुप्तः [a]स्वप्नया[2] चरति तम् एवाहम् उपास इति । तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः । यमो राजेति वा अहम् एतम् उपास इति । स यो हैतम् एवम् उपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥

स होवाच बालाकिः — य एवैष शरीरे पुरुषस् तम् एवाहम् उपास इति । तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः । प्रजापतिर् इति वा अहम् एतम् उपास इति । स यो हैतम् एवम् उपास्ते प्रजायते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ १६ ॥

स होवाच बालाकिः — य एवैष दक्षिणेऽक्षिणि पुरुषस् तम् एवाहम् उपास इति । तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः । वाच आत्माऽग्नेर् आत्मा ज्योतिष आत्मेति वा अहम् एतम् उपास इति । स यो हैतम् एवम् उपास्त एतेषां सर्वेषाम् आत्मा भवति ॥ १७ ॥

स होवाच बालाकिः — य एवैष सव्येऽक्षिणि पुरुषस् तम् एवाहम् उपास इति । तं होवाचाऽजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः । सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहम् एतम्

---

१. य एवैषः कौउ. ।　　२. भा[४,५] कौउ. शं. ।

---

*a*) क्रिवि. । तृ१ अयाच् आदेशः (तु. पावा ७, १, ३९) । स्वप्नयया वि[२] (तु. बृ. २,१,१८) ।

उपास इति । स यो हैतम् एवम् उपास्त एतेषां सर्वेषाम् आत्मा भवति ॥ १८ ॥

तत उ ह बालाकिस् तूष्णीम् आस । तं होवाचाऽजातशत्रुः— [1]एतावन् नु[1] बालाका३ इति । एतावद् इति होवाच बालाकिः । तं होवाचाऽजातशत्रुः — मृषा वै खलु मा संवादयिष्ठा ब्रह्म ते ब्रवाणीति । स होवाच — यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्य इति । तत उ ह बालाकिः समित्पाणिः प्रतिचक्रम उपायानीति । तं होवाचाऽजातशत्रुः—प्रतिलोमरूपम् [2]एव तन्[2] मन्ये यत् क्षत्रियो ब्राह्मणम् उपनयेत । एहि व्येव त्वा ज्ञपयिष्यामीति । तं ह पाणाव् अभिपद्य प्रवव्राज । तौ ह सुप्तं पुरुषम् आजग्मतुः । तं हाऽजातशत्रुर् आमन्त्रयाञ्चक्रे — [3]बृहन् पाण्डरवासः[3] सोम राजन्न् इति । स उ ह शिश्य[4] एव । तत उ हैनं यष्ट्या विचिक्षेप । स तत एव समुत्तस्थौ । तं होवाचाऽजातशत्रुः — क्वैष एतद् बालाके पुरुषोऽशयिष्ट । [5]क्व वै तद्[5] अभूत् कुत एतद् आगाद् इति । तत उ ह बालाकिर् न विजज्ञे । तं होवाचाऽजातशत्रुः — यत्रैष एतद् बालाके पुरुषोऽशयिष्ट, यत्रैतद् अभूत्, यत एतद् आगाद् इति । हिता नाम पुरुषस्य नाड्यो हृदयात् पुरीततम् अभिप्रतन्वन्ति तद् यथा सहस्रधा केशो विपाटितस्तावद् अण्व्यः । पिङ्गलस्याऽणिम्न्यस्[6] तिष्ठन्ति शुक्लस्य कृष्णस्य पीतस्य लोहितस्य च । तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यति ॥ १९ ॥[a]

---

१-१. °तावत्तु भा[2,5] । २-२. एतन् भा[2,4,5] वि[2] । ३-३. शां. । बृहत्पाण्ड° भा[1,2,4,5] वि[2] कौउ. । ४. शिष्य भा[2] । ५-५. क्व चैत° भा[2,4,5]; क्वैत° कौउ. । ६. °णिम्ना कौउ. बृ.; °णिम्नः छां. ।

---

a) तु. बृ २,१,१९; ४,३,२० छां ८,६,१ ।

अथास्मिन् प्राण एवैकधा भवति । तद् एनं वाक् सर्वैर् नामभिः सहाप्येति । चक्षुः सर्वै रूपैः सहाप्येति । श्रोत्रं सर्वैः शब्दैः सहाप्येति । मनः सर्वैर् ध्यातैः[1] सहाप्येति । स यदा प्रतिबुध्यते, यथाऽग्नेर् ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन् एवम् एवैतस्माद् आत्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः । स एष प्राण एव प्रज्ञात्मेदं शरीरम् आत्मानम् अनुप्रविष्ट आ लोमभ्य आ नखेभ्यः । तद् यथा क्षुरः [2]क्षुरधाने वोपहितो[2] विश्वंभरो वा विश्वंभरकुलाय एवम् एवैष प्रज्ञात्मेदं शरीरम् आत्मानम् अनुप्रविष्ट आ लोमभ्य आ नखेभ्यः । तम् एतम् आत्मानम् एत[3] आत्मानोऽन्ववस्यन्ते यथा श्रेष्ठिनं स्वाः । तद् यथा श्रेष्ठी[4] स्वैर् भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति । एवम् एवैष प्रज्ञात्मैतैर् आत्मभिर् भुङ्क्ते । एवम् एवैत आत्मान एतम् आत्मानं भुञ्जन्ति । स यावद् ध वा इन्द्र एतम् आत्मानं न विजज्ञे तावद् एनम् असुरा अभिबभूवुः । स यदा विजज्ञेऽथ हत्वाऽसुरान् विजित्य सर्वेषां च देवानां श्रैष्ठ्यं स्वाराज्यम् आधिपत्यं पर्यैत् । तथो एवैवं विद्वान् सर्वान् पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यम् आधिपत्यं पर्येति । य एवं वेद य एवं वेद ॥ २० ॥

इति शाङ्खायनारण्यके षष्ठोऽध्यायः[5] ॥

---

१. ध्यानैः कौउ. । २-२. °नेव° भा[2] । ३. एतद् भा[1] ।
४. °ष्ठीः भा[4], °ष्ठ्यै भा[1,5] । ५. चतुर्थोऽध्यायः वि[2] ।

# अथ सप्तमोऽध्यायः[a]

ओम् ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन् माम् अवतु तद् वक्तारम् अवत्ववतु माम् अवतु वक्तारम् । मयि भर्गो मयि महः । वाङ् मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् । आविर् [1]आविर् मय्याभूः[1] । [2]वेदस्य म आणीः[2] । [b]ऋत मा मा हिंसीः[c] । [3]अनेनाधीतेनाहोरात्रान् त्संवसामि[3] । अग्ने इळा नम इळा नमः । ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमोऽस्तु देवेभ्यः । शिवा नः शंतमा भव सुमृडीका [4]सरस्वति[d] मा ते व्योम[e] संदृशि । अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठः । दीक्षे मा मा हिंसीः ॥ १ ॥

अथातः संहिताया उपनिषत्[f] । पृथिवी पूर्वरूपं द्यौर् उत्तररूपं वायुः संहितेति शौरवीरो माण्डूकेयः । आकाशः संहितेत्यस्य माण्डव्यो

---

१-१. °विर्मर्या° ⌊र्य्या वि[2]⌋ भा[1,2,4,5] वि[2] । २-२. वेदसामत्साणीः भा[1,2,4,5] वि[2] । ३-३. °त्रात्सं° भा[1,4,5], °त्रान् सं° वि[2] । ४. °ती वि[2] प्रभृ. ।

---

*a*) तु. सपा. ऐआ ३, १, १-६ । *b*) °**तम्** इति पाठः ? यनि. शोधः द्र. (तु. वैप २, K. ? ⌊तु. सपा., ऐआ. टि. **श्रुतम् च**⌋) । *c*) 'आविर् आविर् म एधि वेदस्य म आणी स्थः, श्रुतं(?) मे मा प्रहासीः' ऐआ २, ७ (तु. खि ४, ८, ५ कागृ ४१, १८ पागृ २, १६, १) । 'आविर् आयुर् मयि धेहि वेदस्य वाणीः(?) स्थः' मागृ. (१, ४, ४) इति च पाठस्य संदिग्धस्य सतः 'माणी > म आणी स्थः' इति K. **शोधः** ( तु. ऐआ. टि. ) । **शं.** (तु. कौउ. शान्तिः) 'वेदसा मत्, सा, आणीः' इति च, K. 'वेदसाम-त्सारिणीः' ( < √त्सर् '*अन्तर्गमने') इति च प्रतिपन्नौ विमर्शसहौ भवतः । *d*) तु. **ऐउ. कौउ. शान्तिः**, K. **च** ।
*e*) वि√यु '**अमिश्रणे**' > (लेटि उपु३) *वियवाम > (वावि.) *वियोम>व्योम' इति द्र. (तु. वैप १ २ 'वि.···यु°' इति ; सपा. ऋ ७, ७१, १ 'युयोम संदृशः' इति च पाभे.; वैतु. भा. सा. ⌊तैआ १०, ७२⌋ <व्योमन्— इत्याहतुस्तच् चिन्त्यम् ) । *f*) तु. तैउ १, ३ ।

वेदयाञ् चक्रे — स हाऽविपरिहृतो[1] मेने न मेऽस्य पुत्रेण समगाद् इति। परिहृतो[2] मेन इत्यागस्त्यः। समानं ह्यत्र पितुश्च पुत्रस्य च वायुश् चाकाशश् च। इत्यधिदैवतम्।

अथाध्यात्मम्। वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शौरवीरो माण्डूकेयः। अथ ह स्माऽस्य पुत्र आह दीर्घः — मनसा वा अग्रे कीर्तयति तद् वाचा वदति। तस्मान् मन एव पूर्वरूपं वाग् उत्तररूपं मनो वाक् प्राणस् त्वेव संहितेति। स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहितः[3] स्वर्गं लोकं गमयति। स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एतीति नु माण्डूकेयानाम्॥ २॥

शाकल्यस्य पृथिव्यग्निः पृथिवी वाग् अनुव्याहाराः[4]। स यदि निर्भुजः खलु वै वयं मध्यमो वाक् प्राणेन माता जाया प्रज्ञा वाग् बृहद्गतिर्वालि[5] सर्वमुत्तमम्॥ ३॥ १[a]

अथ शाकल्यस्य। पृथिवी पूर्वरूपं द्यौर् उत्तररूपं वायुः संहिता वृष्टिः संधिः पर्जन्यः संधाता। [6]तद् उतापि[6] यत्रैतद् बलवद् अनुगृह्णन् [7]महामेघो वृष्टिं वर्षति[7]। द्यावापृथिव्यौ समधाताम् इत्यधिदैवतम्। अथाध्यात्मम्। पुरुषोऽयं सर्वम् आण्डम्। द्वे विदले भवतः। तत्रेदम् एव पूर्वरूपम् इदम् उत्तररूपम्। तत्रायम् अन्तरेणाकाशः। यथासौ द्यावापृथिव्योर् अन्तरेणाकाश [8]एतस्मिन्न् आकाशे[8] प्राण

---

१. °विपरिहृवृ° भा[1] वि[2]; °पि परिहृवृ° भा[2,5], °पिपरिवृ° भा[4] वि[2]। २. °रिवृ° भा[4] वि[2] °रिहृवृ° भा[1,2,5]। ३. °णः सं° भा[1,4,5] वि[2]। ४. °रः भा[5]। ५. °तिवा° भा[1,4,5]। ६-६. तदु तत्रापि वि[2]। ७-७. °घा···वर्षन्ति मूको.। ८-८. तस्मिन्हारिमन्ना° ऐआ.।

---

*a*) यावदुपलब्धेषु मूको. पाठोपलम्भे सत्यपि उत्तरोत्तरकण्डिकागतानां पाठांशानाम् अव्यवस्थितरूपेणेह समावशादस्य मौलिकत्वे संदेहः। K. तु प्रक्षिप्तः पाठ इति कृत्वा टि. समावेशितवान्।

आयत्तो भवति यथामुष्मिन्न् आकाशे वायुर् आयत्तो[1] भवति। यथामूनि त्रीणि ज्योतींष्येवम् इमानि पुरुषे त्रीणि ज्योतींषि। यथासौ दिव्यादित्य एवम् इदं शिरसि चक्षुः। यथासावन्तरिक्षे विद्युद् एवम् इदम् आत्मनि हृदयम्। यथायम् अग्निः पृथिव्याम् एवम् इदम् उपस्थे रेतः। [2]एवमिव ह[2] स्म सर्वत आत्मानम् अनुविधायाऽऽह — इदम् एव पूर्वरूपम् इदम् उत्तररूपं मनो वाक् प्राणस् त्वेव संहितेति।

स एषोऽश्वरथः प्रष्टिवाहनो[3] मनोवाक्प्राणसंहितः[4] स्वर्गं लोकं गमयति। स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ ४ ॥

पृथिवी पूर्वरूपं द्यौर् उत्तररूपं वायुः संहिता दिशः संधिर् आदित्यः संधातेति वैश्वामित्रः[5]। इत्यधिदैवतम्।

अथाध्यात्मम्। वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहिता श्रोत्रं संधिश् चक्षुः संधाता। स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ ५ ॥

अग्निः पूर्वरूपं चन्द्रमा उत्तररूपं विद्युत् संहितेति सूर्यदत्तः[6]। इत्यधिदैवतम्। अथाध्यात्मम् — वाक् पूर्वरूपं मन उत्तररूपं सत्यं संहिता। स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ ६ ॥

पृथिवी पूर्वरूपं द्यौर् उत्तररूपं कालः संहितेति राधेयः। इत्यधिदैवतम्। अथाध्यात्मम् — वाक् पूर्वरूपं मन उत्तररूपम् आत्मा संहिता।

---

१. °यतो भा[२]। २-२. एवमिह भा[२]। ३. पृष्टि° भा[४], प्रपृष्टि° भा[२]। ४. °णः सं° भा[१]। ५. विश्वा° K.। ६. °र्यदेवत भा[१'४]।

स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ ७ ॥

वाक् पूर्वरूपं मन उत्तररूपं विद्या संहितेति पौष्करसादिः । स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ ८ ॥

अथातोऽनुव्याहाराः । प्राणो वंश इति विद्यात् । स य एनं प्राणं वंशं ब्रुवन् परम् उपवदेत्[१], शक्नुवन् कश्चिच् चेन् मन्येत—प्राणं वंशं समधाः?[a]। प्राणं वंशं संधित्सितुं[२] न शक्नोषीत्यात्थ[३] । प्राणस् त्वा वंशो [४]हास्यतीत्येवैनं[४] ब्रूयात् । अथ चेद् अशक्नुवन् मन्येत प्राणं वंशं समधित्सीः[५] तं नाऽशकः संधातुं प्राणस् त्वा वंशो [४]हास्यतीत्येवैनं[४] ब्रूयात् । यथा नु कथा च ब्रुवन् वाऽब्रुवन् वा ब्रूयाद् अभ्याशम्[६] एव [७]यत् तत् तथा[७] स्यात् । न त्वेवाऽन्यत् कुशलाद्[८] ब्राह्मणं ब्रूयाद् अतिद्युम्न एव ब्राह्मणं[९] ब्रूयान् [१०]नातिद्युम्ने च न[१०] ब्राह्मणं ब्रूयान् नमोऽस्तु ब्राह्मणेभ्य इति शौरवीरो माण्डूकेयः ॥ ९ ॥

स यदि प्राणं वंशं ब्रुवन्तं परम् [१]उपवदेत् शक्नुवन्तं चेन् मन्येत — प्राणं वंशं समधित्सिषम् प्राणं वंशं संधित्सितुं[२] न शक्नोषीत्यात्थ[३] । प्राणस् त्वा वंशो हास्यतीत्येवैनं ब्रूयात् । अथ चेद् अशक्नुवन्तं मन्येत — प्राणं वंशं समधित्सीस् तन् नाऽशकः संधातुम् । प्राणस् त्वा वंशो हास्यतीत्येवैनं ब्रूयात् । यथा नु कथा च ब्रुवन्तं वाऽब्रुवन्तं वा ब्रूयाद् अभ्याशम्[६]

---

१. अप° वि[२] । २. समधि° भा[१,४] वि[२], संधि य: सितुं दधन् भा[१], संदधन् भा[२] । ३. °त्यात्थ: भा[४] वि[२]; °त्याह K. । ४-४. °स्य प्रतित्येनं वि[२] । ५. °धिप्सी: भा[१], °धित्स्ती: भा[२] । ६. °सम् भा[१,५] वि[२] । ७-७. यत्तथा भा[४] वि[२] । ८. °लान् भा[२], °ला भा[१] । ९. ब्राह्म भा[४] । १०-१०. °म्ने न च भा[१,४,५] वि[२] भा[२] [२यो हस्तः] ।

---

*a*) पाठः? समधाम् इति पाठः साधीयस्तर इति (तु. नाउ. खण्डः) ।

एव [1]यत् तत् तथा[1] स्यात् न त्वेवान्यत् कुशलाद्[2] ब्राह्मणं ब्रूयात्; अतिद्युम्न एव ब्राह्मणं ब्रूयात्, [3]नातिद्युम्ने च न[3] ब्राह्मणं ब्रूयात्, नमोऽस्तु ब्राह्मणेभ्य इति शौरवीरो माण्डूकेयः ॥ १० ॥

अथातो निर्भुजप्रवादाः[4]। पृथिव्यायतनं निर्भुजं दिवायतनं प्रतृण्णम्[5], अन्तरिक्षायतनम् उभयम् अन्तरेण। स य एनं निर्भुजं ब्रुवन् परम् उपवदेत्[6]। पृथिवीं देवताम् आरः, पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयात्। अथ यदि [5]प्रतृण्णं ब्रुवन् परम् उपवदेद्[6] दिवं देवताम् आरः, द्यौस् त्वा देवता रिष्यतीत्येनं ब्रूयात्। अथ यद्युभयम् अन्तरेण ब्रुवन् परम् उपवदेद्[6] अन्तरिक्षं देवताम् आरः, अन्तरिक्षं त्वा देवता रिष्यतीत्येनं[7] ब्रूयात्। यद् धि संधिं विवर्तयति तन् निर्भुजस्य रूपम्। अथ यच् छुद्धे अक्षरे अभिव्याहरति तत् प्रतृण्णस्याऽग्र[8] उ एव। उभयम् [9]अन्तरेणोभयं व्याप्तं[9] भवति। अन्नाद्यकामो निर्भुजं ब्रूयात्, स्वर्गकामः प्रतृण्णम्[5], उभयकाम उभयम् न्तरेण। स य एनं निर्भुजं ब्रुवन् परम् उपवदेद्[6] अक्ष्योष्ठा अधराभ्यां स्थानाभ्याम् इत्येनं ब्रूयात्। अथ यदि प्रतृण्णं[5] ब्रुवन् परम् उपवदेद्[6] अक्ष्योष्ठा उत्तराभ्यां स्थानाभ्याम् इत्येवैनं ब्रूयात्। यस्त्वेवोभयम् अन्तरेणाऽऽह तस्य नास्त्युपवादः। यथा नु कथा च ब्रुवन् वाऽब्रुवन् वा ब्रूयाद् अभ्याशम्[10] एव [11]यत् तत् तथा[11] स्यात् न त्वेवाऽन्यत् कुशलाद् ब्राह्मणं ब्रूयाद् अतिद्युम्न एवं ब्राह्मणं ब्रूयान् [3]नातिद्युम्ने च न[3] ब्राह्मणं ब्रूयात्। नमोऽस्तु ब्राह्मणेभ्य इति शौरवीरो माण्डूकेयः ॥ ११ ॥

अथ खल्वाहुर् निर्भुजवक्त्राः। पूर्वम् एवाक्षरं पूर्वरूपम्, उत्तरम् उत्तररूपम्। यकार-वकारावन्तरेण सा संहितेति। स य एवम् एतां

---

१-१. यत्तथा भा[४] वि[२]। २. °लान् भा[२], °ला भा[१]। ३-३. °म्ने न च भा[१,४,५] वि[२] भा[२] [२यो हस्तः]। ४. °जः प्र° भा[१,२,४,५] वि[२]। ५. °तृणं° वि[२]। ६. अप° वि[२]। ७. °त्येवैनं वि[२] भा[१,५]। ८. प्रणस्या° वि[२]। ९-९. °भयं संव्याप्तं भा[१,५]। १०. °सम् भा[१,२,५] वि[२]। ११-११. यत्तथा भा[४]।

संहितां वेद संधीयते प्रजया[1] पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ १२ ॥

अथ वै वयं ब्रूमो निर्भुजवक्त्राः स्म इति ह स्माऽऽह ह्रस्वो माण्डूकेयः । पूर्वम् एवाक्षरं पूर्वरूपम् उत्तरम् उत्तररूपम् । तद् यासौ मात्रा पूर्वरूपोत्तररूपे[2] अन्तरेण येन संधिं विवर्तयति, येन मात्रामात्रं विभजति, येन स्वरात् स्वरं विज्ञापयति सा संहितेति । स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ १३ ॥

अथ ह स्मास्य पुत्र आह मध्यमः प्रातियोधीपुत्रो[3] मगधवासी[4] पूर्वम् एवाक्षरं पूर्वरूपम् उत्तरम् उत्तररूपम् । तद् यासौ मात्रा संधिविज्ञापनी[5] साम तद् भवति, सामैवाहं संहितां मन्य इति । तद् एतद् ऋचाभ्युदितम् —

मा नः स्तेनेभ्यो ये अभि द्रुहस् पदे,
निरामिणो रिपवोऽन्नेषु जागृधुः ।
आ देवानाम् ओहते वि व्रयो हृदि,
बृहस्पते न परः साम्नो विदुः ॥ [a] इति ।[6]

स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ १४ ॥

वाक् प्राणेन संधीयत इति कौण्ठरव्यः । प्राणः पवमानेन पवमानो विश्वैर् देवैर् विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषाऽवरपरा संहिता । स य एवम् एताम् अवरपरां संहितां वेद, एवं हैव स

---

१. प्रजाया भा[२] । २. °पा वि[२] । ३. °यो धि° भा[५] । °बोधी° इति ऐग्रा. K. च । ४. माग° वि[२] । ५. सन्धिर्विज्ञा° वि[२] । ६. °मानस्तेनेभ्यो ये इत्यृग् इति भा[५] ।

---

a) ऋ २, २३, १६ ।

प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन संधीयते यथैषा-ऽवरपरा संहिता। स यदि परेण वोपसृष्टः स्वेन वार्थेनाऽभिव्याहरेद् अभिव्याहरन्न् एव विद्यात् — दिवं संहिताऽगमद् विदुषो देवान् अभि-व्याहारार्थम् एवं भविष्यतीति। एतेनाऽवरपरेण तथा हैव तद् भवति ॥ १५ ॥

माता पूर्वरूपं पितोत्तररूपं प्रजा संहितेति भार्गवः। तद् एतद् एकम् एव सर्वं अभ्यनूक्तम्। माता च ह्येवेदं पिता च प्रजा च सर्वम्। [1]सैषाऽदितिसंहिता[1]। अदितिर् ह्येवेदं सर्वं यद् इदं किंचिद् विश्वभूतम्। तद् एतद् ऋचाऽभ्युदितम् —

अदितिर् द्यौर् अदितिर् अन्तरिक्षम्,
अदितिर् माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्च जना
अदितिर् जातम् अदितिर् जनित्वम् ॥[a]

स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ १६ ॥

जाया पूर्वरूपं पतिर् उत्तररूपं पुत्रः संहिता रेतः संधिः प्रजननं संधानम् इति स्थविरः शाकल्यः। सैषा [2]प्रजापतिसंहिता[2]। स य एवम् एतां संहितां वेद संधीयते[3] प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ १७ ॥

प्रज्ञा[4] पूर्वरूपं श्रद्धोत्तररूपं कर्म संहिता सत्यं संधानम् इति काश्यपः। सैषा सत्यसंहिता। तद् आहुर् यत् सत्यसंधा देवा इति।

---

१-१. °तिः सं° भा[४,५] वि[२]। २-२. °तिः सं° भा[२,४], भा[१] [२यो हस्तः]।
३. प्रजायते भा[२,४,५] वि[२] K.। ४. प्रजा K.।

---

*a*) ऋ १, ८९, १०।

स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ १८ ॥

वाक् संहितेति पञ्चालचण्डः[1]। वाचा वै वेदाः[2] संधीयन्ते[3] वाचा छन्दांसि वाचा मित्राणि [4]संदधति[a]। तद् यत्रैतद् अधीते वा[5] भाषते वा वाचि तदा प्राणो भवति। वाक् तदा प्राणं रेळ्हि। अथ यत् स्वपिति वा तूष्णीं वा भवति प्राणे तदा वाग् भवति प्राणस्तदा वाचं रेळ्हि। ताव् अन्योन्यं रीळ्हः[6]। तद् एतद् ऋचाऽभ्युदितम् —

एकः सुपर्णः स समुद्रम् आविवेश,
　　　　स इदं विश्वं भुवनं विचष्टे।
तं पाकेन मनसाऽपश्यम् अन्तितस्,
　　　　तं माता रेळ्हि स उ रेळ्हि मातरम् ॥[b] इति।

वाग् वै माता प्राणो वत्सः। स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ १९ ॥

बृहद्रथंतरेण रूपेण संहिता[7] संधीयत इति तार्क्ष्यः। वाग् वै रथंतरस्य रूपं प्राणो बृहतः। उभाभ्याम् उ खलु संहिता संधीयते वाचा च प्राणेन च। एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयत[8] इति तार्क्ष्यः। एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयत[8] इति तार्क्ष्यः। स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ २० ॥

---

१. चंडालचं° भा[५]। २. वेद वि[२]। ३. °यते भा[४] वि[२]। ४. °धाति K.। ५. वाचा भा[५]। ६. वि[२] ऐआ.। रेळ्हः भा[१,२,४,५]। ७. °तायां भा[५]। ८. भा[१,२,५] K. ऐआ.। रक्षत भा[४] वि[२]।

---

*a*) <सम् √दध् [प्रपु१]। *b*) ऋ १०, ११४, ४।

गतिः पूर्वरूपं निवृत्तिर् उत्तररूपं स्थितिः संहितेति जारत्कारव आर्तभागः[1]। तस्याम् एतस्यां संहितायां ध्वंसयो निमेषाः काष्ठाः[2] कलाः[3] क्षणा मुहूर्ता अहोरात्रा अर्धमासा मासा ऋतवः संवत्सराश्च संधीयन्ते। सैषा संहितैतान् कालान् संदधाति । कालो गतिनिवृत्तिस्थितीः संदधाति। [4]गतिनिवृत्तिस्थितिभिर् इदं[4] सर्वं संधीयते। इत्यधिदैवतम्। अथाध्यात्मम्—भूतं पूर्वरूपं भविष्यद् उत्तररूपं भवत् संहितेति[5] [6]कालसंधिः। तद् एतद्[6] ऋचाऽभ्युदितम् —

> महत् तन् नाम गुह्यं पुरुस्पृग्,
> येन भूतं जनयो येन भव्यम्।
> प्रत्नं जातं ज्योतिर् यद् अस्य
> प्रियं प्रियाः समविशन्त पञ्च ॥ [a] इति।

स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ २१ ॥

अथातो वालिशिखायनेर् वचः। पञ्चेमानि महाभूतानि भवन्तीति ह स्माह वालिशिखायनिः। पृथिवी वायुर् आकाशम् आपो ज्योतींषि तानि मिथः संहितानि भवन्ति। अथ यान्यन्यानि क्षुद्राणि महाभूतैः संधीयन्ते सैषा सर्वविभूतसंहिता। स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति ॥ २२ ॥

सर्वा वाग् ब्रह्मेति ह स्माह लौहिक्यः[7]। ये तु केचन[8] शब्दाः, वाचम् एव तां विद्यात्। तद् अप्येतद् ऋषिर् आह — अहं रुद्रेभिर्

---

१. आवर्त्तभा° भा[५]। २. क° भा[५]। ३. का° भा[४] वि[२]। ४-४. °भिर्वा इ° भा[२,५] वि[२]। ५. °हिता च भा[२,५]। ६-६. वि[२] [प्रान्ते पूरितः] ; कालस्तदे° भा[४]। ७. लौहित्यः ?K. (तु. जैउ ३, ४२, १)। ८. केच भा[२]।

---

*a*) ऋ १०, ५५, २।

वसुभिश् चरामि (ऋ १०,१२५,१) इति । सैषा वाक् सर्वशब्दा भवति । स य एवम् एतां संहितां वेद संधीयते प्रजया पशुभिर् यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वम् आयुर् एति । यथा चैतद् ब्रह्म कामरूपि[1] कामचारि[2] भवत्येवं हैव स सर्वेषु भूतेषु कामरूपी[3] कामचारी भवति । य एवं वेद य एवं वेद ॥ २३ ॥

इति शाङ्खायनारण्यके सप्तमोऽध्यायः[4] ॥

---

१. °पी भा^५ । २. °री भा^५ । ३. नास्ति भा^५ । ४. पञ्चमोध्यायः वि^२ ।

# अथ अष्टमोऽध्यायः

प्राणो वंश इति ह स्माऽऽह स्थविरः शाकल्यः । तद् यथा शालावंशे[1] सर्वेऽन्ये[2] वंशाः समाहिताः स्युः, एवम् एवैतस्मिन् प्राणे सर्व आत्मा समाहितः । तस्यैतस्याऽऽत्मनः प्राण ऊष्मरूपम् अस्थीनि स्पर्शरूपं मज्जानः स्वररूपं [3]मांसं लोहितम् इत्येतच् चतुर्थम्[3] [4]अन्तस्था-रूपम्[4] इति । त्रयं त्वेव न एतत् प्रोक्तम् इति ह स्माऽऽह ह्रस्वो माण्डूकेयः । तस्यैतस्य त्रयस्य [b]त्रीणीतः षष्टिशतानि[b] भवन्ति संधीनां [c]त्रीणीतस् तानि सप्तविंशतिशतानि[c] भवन्ति । [c]सप्त वै विंशतिशतानि[c] संवत्सरस्याऽहोरा-त्राणाम् । तत् संवत्सरस्याऽहोरात्राण्याप्नोति । स एष [8]संवत्सरसंमानश् चक्षुर्मयश् श्रोत्रमयश् छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवम् एतं[5] संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयम् आत्मानं वेद संवत्सरस्य सायुज्यं सलोकतां सरूपतां सभक्तताम् अश्नुते । पुत्री पशुमान् भवति सर्वम् आयुर् एत्यस्याऽऽरुणिकेयो[6] वेदयाञ्चक्रे ॥ १ ॥[a]

अथ कौष्ठरव्यः[7] । [b]त्रीणि षष्टिशतान्यक्षराणाम्[b] । [b]त्रीणि षष्टिशतान्यूष्मणाम्[b] । [b]त्रीणि षष्टिशतानि[b] संधीनाम् । यान्यक्षराण्य-वोचामाऽहानि तानि । यान् ऊष्मणो रात्रयस्ताः । यान् संधीन् अवोचामाऽहोरात्राणां ते संधयः । इत्यधिदैवतम् ।

अथाध्यात्मम् — यान्यक्षराण्यधिदैवतम् अवोचामाऽस्थीनि तान्यध्यात्मम् । यान् [8]ऊष्मणोऽधिदैवतम् अवोचाम मज्जानस् तेऽध्यात्मम् । एष उ ह वै संप्रतिप्राणो यन् मज्जा, एतद् रेतः, न वा ऋते प्राणाद्

---

१. शाकलावं° वि[3], °ल्यावं° भा[5] । २. °र्वे भा[5] । ३-३. मांस-मित्ये° भा[5] । ४-४. अक्षररूपम् इति मूको. सतः पाठस्य यनि शोधः द्र. (तु. सपा. ऐआ., K. टि. च ) । =°स्थ->स्था इति । ५. °तां भा[5] । ६. °णीके° वि[2,3] । ७. कौठ° वि[2] भा[2] । ८. °ष्मा° वि[3] ।

---

*a*) तु. ऐआ ३, २, १ । *b-b*) = ३६० । असमर्थ-समासः द्र. । *c-c*) =७२० (तु. का ३,१,५,१) । समासस्य कृते [तु. नापू. टि.] ; सपा. श २,३, ३, २० सप्त चैव शतानि विंशतिश्चेति पाभे. ।

रेतसः सिद्धिर् अस्ति । यद् वा ऋते प्राणाद् रेतः [1]सिच्येत तत् पूयेन् न[1] संभवेत् । यान् संधीन् अधिदैवतम् अवोचाम पर्वाणि तान्यध्यात्मम् । तस्यैतस्याऽस्थ्नां मज्ज्ञां पर्वणाम् इति पञ्चेतश्चत्वारिंशच्छतानि[a] भवन्ति । संधीनां [b]पञ्चेतस्तद्शीतिसहस्रं[b] भवति[2] । अशीतिसहस्रं वार्कलिनो[3] बृहतीर् अहरहनि[4] संपादयन्ति । स एषोऽहःसंमानश् चक्षुर्मयः श्रोत्रमयश् छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवम् एतद् अहः-संमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयम् आत्मानं वेद, अह्नां सायुज्यं सलोकतां सरूपतां सभक्षताम् अश्नुते । पुत्री पशुमान् भवति सर्वम् आयुर् एति ॥ २ ॥[c]

चत्वारः पुरुषा इति वात्स्यः[5]—शरीरपुरुषश् छन्दःपुरुषो वेदपुरुषो महापुरुष इति । शरीरपुरुष इति यम् अवोचाम य एवाऽयं दैहिक आत्मा तस्यैतस्य योऽयम् अशरीरः प्रज्ञाऽऽत्मा स रसः । छन्दःपुरुष इति यम् अवोचाम, अक्षरसमाम्नाय एव । तस्यैतस्य अ-कारो रसः । वेदपुरुष इति यम् अवोचाम येन वेदान् वेद-ऋग्वेदं यजुर्वेदं सामवेदम् इति तस्यैतस्य ब्रह्मरसः[6] । तस्माद् ब्रह्मिष्ठं ब्रह्माणम् ऋत्विजं कुर्वीत यो यज्ञस्योल्वणं विद्यात् । महापुरुष इति यम् अवोचाम संवत्सर एव तस्यैतस्या-ऽसाव् आदित्यो रसः । स यश् चाऽयम् अशरीरः प्रज्ञाऽऽत्मा यश् चाऽसाव् आदित्य एकम् एतद् इति विद्यात् । तद् एतद् ऋचाऽभ्युदितम् ॥ ३ ॥[c]

चित्रं देवानाम् उदगाद् अनीकम्,
चक्षुर् मित्रस्य वरुणस्याऽग्नेः ।
आऽप्रा द्यावापृथिवी अन्तरिक्षम्,
सूर्य आत्मा जगतस् तस्थुषश् च ॥[d] इति ।

---

१-१. °च्येत त्पूये° भा[२]; °च्येत्° भा[१,४,५] वि[२,३] । २. °वंति भा[२] । ३. वा अर्कलि° वि[२]; वार्क्कलि° भा[२,५]; वार्कलि° भा[१,४]; वाष्क° वि[३] । ४. °निमि भा[२] । ५. वि[२,३] [२यो हस्तः], K. ; बाध्वः भा[१,५], भा[२] [२यो हस्तः], वि[२] [१मो हस्तः], वात्स्यः भा[४] । ६. ब्रह्मा भा[२], ऐआ. ।

---

*a*) =५४० । असमर्थ-समासः द्र. । *b-b*) =१०८० । *c*) यक्र. ऐआ ३,२,२; ३ । *d*) ऋ १,११५,१ ।

एतामेवाऽनुविंशां संहितां संधीयमानां मन्य[1] इति ह स्माऽऽह वात्स्यः[2]— एतम् उ हैव बह्वृचा महदुक्थे मीमांसन्ते, एतम् अग्नावध्वर्यवः, एतं महाव्रते छन्दोगाः, [3]एतम् अस्याम्[3][a], एतम् अन्तरिक्षे, एतं दिवि, एतम् अग्नौ, एतं वायौ, एतं चन्द्रमसि, एतं नक्षत्रेषु, एतम् अप्सु, एतम् ओषधीषु, एतं सर्वेषु भूतेषु, एतम् अक्षरेषु, एतम् एव ब्रह्मेत्युपासते । तद् एतद् ऋचाऽभ्युदितम् ॥ ४ ॥

उद् वयं तमसस् परि,
ज्योतिष् पश्यन्त[4] उत्तरम् ।
देवं देवत्रा सूर्यम्,
अगन्म ज्योतिर् उत्तमम् ॥[b] इति ।

स एषोऽक्षरसंमानश् चक्षुर्मयः श्रोत्रमयश् छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवम् एतम् अक्षरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयम् आत्मानं परस्मै शंसति दुग्धदोहा अस्य वेदा भवन्ति[5] । अभागो वाचि भवति, अभागोऽनूक्ते[6] । तद् एतद् ऋचाऽभ्युदितम् ॥ ५ ॥[c]

यस् तित्याज सचिविदं सखायं,
न तस्य वाच्यपि भागो अस्ति ।
यद् ईं शृणोत्यलकं शृणोति,
न हि प्रवेद सुकृतस्य पन्थाम् ॥[d] इति ।

---

१. °न्यत मूको. । २. वि[2,3] [२यो हस्तः], K. ; वाध्वः भा[1,5], भा[2] [२यो हस्तः], वि[2] [१मो हस्तः] वात्स्यः भा[4] । ३-३. एतस्या° भा[4] । ४. °तिस्प° भा[2] । ५. °ति भा[2] । ६) तु. नाउ. खण्डः ; ऐआ. K. ; °भोनाके सर्वे मूको. ।

---

*a*) पृथिव्यामिति शेषः । *b*) ऋ १,५०,१० । *c*) तु. ऐआ ३,२,३ । *d*) ऋ १०, ७१, ६ ।

नाऽस्याऽनूक्ते वाचो भागो अस्तीत्येव तद् आह, तन् न परस्मा एतद् अहः शंसेत्। नाऽग्निं चिनुयान् न [1]महाव्रतेन स्तुयान् नेद्[1] आत्मनोऽपिहीया इति।

स यश् चाऽयम् अशरीरः प्रज्ञाऽऽत्मा यश् चाऽसावादित्य एकम् एतद् इत्यवोचाम तौ यत्र विप्रदृश्येते ॥ ६ ॥[a]

चन्द्रमा इवाऽऽदित्यो दृश्यते न रश्मयः प्रादुर् भवन्ति। लोहिनी द्यौर् भवति यथा मञ्जिष्ठाः। व्यस्तः पायुर् भवति। संपरेतोऽस्याऽऽत्मा[2] न चिरम् इव जीविष्यतीति विद्यात्। स यत् करणीयं मन्येत तत् कुर्यात्। अथाऽप्यादर्शे वोदके वा [3]जिह्मशिरसं वाऽशिरसं[3] वाऽऽत्मानं पश्येन् न वा पश्येत्। तदप्येवम् एव विद्यात्। अथाऽपि छिद्रा छाया भवति न वा भवति तदप्येवम् एव विद्यात्। [4]अथाऽपि च्छिद्र इवाऽऽदित्यो रथनाभिर् इवाऽऽख्यायेत् तदप्येवम् एव विद्यात्[4]। अथाऽपि नील इवाऽग्निर् दृश्येत यथा मयूरग्रीवा महामेघे वा मरीचीरिव पश्येत्। अनभ्रे वा विद्युतं[5] पश्येत्। अभ्र एनां न पश्येत् तद् अप्येवम् एव विद्यात्। अथाऽप्यपिधायाऽक्षिणी उपेक्षेत तत्रैतद् वराटकानीव[6] न पश्येत् तद् अप्येवम् एव विद्यात्। अथाऽप्यपिधाय कर्णौ उपासीत। य एषोऽग्नेरिव ज्वलतः शब्दो रथस्येवोपब्दिस् तं न यदा शृणुयात् तद् अप्येवम् एव विद्यात्। अथाऽपि विपर्यस्ते कन्यके[7] दृश्येते द्विजिह्वे[8] वा न वा दृश्येते[9] तद् अप्येवम् एव विद्यात्। स योऽतोऽश्रुतोऽमतोऽविज्ञातोऽदृष्टोऽनादिष्टोऽघुष्टः श्रोता मन्ता विज्ञाता द्रष्टाऽऽदेष्टा घोष्टा सर्वेषां भूतानाम् आन्तरः पुरुषः स

---

१-१. °व्रते छंदोगा इत्येतद् भा[१,५] ; नेतद् भा[२,४] वि[२]। २. °त्मानं भा[४]। ३-३. °सिरसं वि[२], सि° भा[२]। ४-४. नास्ति भा[५], °येत् भा[१,४]। ५. °द्युतः वि[१,३]। ६. बारा° भा[४], बरा° भा[५]। ७. कनीनके भा[४], कनीन्यके वि[२] [२यो हस्तः], कन्याके ऐआ.। ८. ऐआ.; °जिह्वे मूको.। ९. दृश्यते भा[४]।

---

a) तु. ऐआ ३,२,४।

म आत्मेति विद्यात् । स उत्क्रामन्न् एवैतम् अशरीरं प्रज्ञाऽऽत्मानम् अभिसंपद्यते विजहातीतरं दैहिकम् । सैषा सर्वस्यै वाच उपनिषत् । सर्वा हैवेमाः सर्वस्यै वाच[1] उपनिषदः । इमां त्वेवम् आचक्षते ॥ ७ ॥[a]

पृथिव्या रूपं स्पर्शाः, अन्तरिक्षस्योष्माणः, दिवः स्वराः । अग्ने रूपं स्पर्शाः, वायोर् ऊष्माणः, आदित्यस्य स्वराः । ऋग्वेदस्य रूपं स्पर्शाः, यजुर्वेदस्योष्माणः, सामवेदस्य स्वराः । रथन्तरस्य रूपं स्पर्शाः, वामदेव्यस्योष्माणः, बृहतः स्वराः । प्राणस्य रूपं स्पर्शाः, अपानस्योष्माणः, व्यानस्य स्वराः । प्राणस्य रूपं स्पर्शाः, अपानस्योष्माणः, मनसः स्वराः । प्राणस्य रूपं स्पर्शाः, अपानस्योष्माणः, उदानस्य स्वरा इति पुनर्दत्तः । एष उ हैव सर्वां वाचं वेद[2] य एवं वेद ॥ ८ ॥[b]

अथ खल्वियं दैवी वीणा भवति । तदनुकृतिर् असौ मानुषी वीणा भवति । तद् यथेयं शस्त्रवती[3] तर्मवती भवत्येवम् एवासौ शस्त्रवती तर्मवती भवति । तद् यथास्याः शिर एवम् अमुष्याः शिरः । तद् यथास्यै वंश एवम् अमुष्या दण्डः । तद् यथास्या उदरम् एवम् अमुष्या अम्भणम् । तद् यथास्यै मुखनासिके अक्षिणी इत्येवम् अमुष्याश् छिद्राणि । तद् यथास्या अङ्गुलिनिग्रहा उपस्तरणानीत्येवम् अमुष्याः पर्वाणि । तद् यथास्या अङ्गुलय एवम् अस्यास् तन्त्र्यः । तद् यथास्यै जिह्वैवम् अमुष्या वादनम् । तद् यथास्याः स्वरा एवम् अमुष्याः स्वराः । तद् यथा हैवेयं रोमशेन चर्मणा पिहिता भवत्येवम् एवासौ रोमशेन चर्मणा पिहिता भवति । रोमशेन ह स्म चर्मणा पुरा वीणा अपिदधति । सैषा दैवी वीणा भवति । स य एतां दैवीं वीणां वेद श्रुतवदनतमो भवति । [4]भूमिप्राऽस्य[4] कीर्तिर् भवति । शुश्रूषन्ते हास्य पर्षत्सु भाष्य-

---

१. वाचा भा[२] । २. वदति भा[५] । ३. शब्दवती ऐआ. । ४-४. भा[४] ऐआ. । °मिप्रा° वि[३] भा[१,२,५] ।

---

*a*) तु. ऐआ ३,२,४; ५ । *b*) तु. ऐआ ३,२,५ ।

माणस्येदम् अस्तु यद् अयम् ईहते । [a]यत्राऽऽर्या वाग् वदति[a] विदुर् एनं[1] तत्र ॥ ९ ॥ [b]

अथातस् ताण्डविन्दस्य वचः । तद् यथेयम् अकुशलेन वादयित्रा वीणाऽऽरब्धा न कृत्स्नं वीणार्थं साधयति, एवम् एवाकुशलेन वक्त्रा वाग् आरब्धा न कृत्स्नं वागर्थं साधयति । तद् यथा हैवेयं कुशलेन वादयित्रा वीणाऽऽरब्धा कृत्स्नं वीणार्थं साधयति, एवम् एव कुशलेन वक्त्रा वाग् आरब्धा कृत्स्नं वागर्थं साधयति । तस्यै वा एतस्यै वीणायै वा त्रिषिः सा संहितेति कात्यायनीपुत्रो जातूकर्ण्यः ।

अथ ह स्मैतत् कृष्णहारितो[c] ब्राह्मणम् एवोदाहरति ॥ १० ॥ [d]

प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत । स छन्दोभिर् आत्मानं समदधत् । तद् यच् छन्दोभिर् आत्मानं समदधत् तस्मात् संहिता ।

तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा संहिता । अथैषा क्षुद्रमिश्रा विकृतिः तानि नखानि रोमाणि व्यञ्जनानीति । स योऽत्र विचिकित्सेत् स-णकारम् एव ब्रूयाद् [2]ऋते ण-कारम्[2] इति स-णकारम् एव ब्रूयात् । एवम् एव योऽत्र विचिकित्सेत् स-षकारम् एव ब्रूयाद् [3]ऋते षकारम्[3] इति स-षकारम्[4] एव ब्रूयात् । तौ वा एतौ णकारषकारौ विद्वान् अनुसंहितम् ऋचोऽधीयीत, आयुष्यम् इति विद्यात्, एवम् एव विद्यात् । अथ वाग् इतिहासपुराणम्, यच् चान्यत् किंचिद् ब्राह्मीकृत्येवाऽधीयीत, तद् अप्येवम् एव विद्यात् । ते यद् वयम् अनु-

---

१. एणं वि[२] । २-२. ऐआ. ?अणका° [तु. टि. वैप २] । °षका° वि[२/३] । ३-३. ऐआ. अषका° । णका° वि[२/३] । ४. सका° भा[४], सखका° भा[५] ।

---

*a-a*) यत्र क्व चार्या वाचो भाषन्ते इति ऐआ. । यत्रार्या वाचं वदन्ति इति स्यादिति K. । *b*) तु. ऐआ ३,२,५ । *c*) तु. टि. वैप २ । *d*) तु. ऐआ ३, २, ६ ।

संहितम् ऋचोऽधीमहे यच् च माण्डूकेयीयम् अध्यायं प्रब्रूमस् तेन नो णकारषकारा उपाप्ताविति ह स्माऽऽह ह्रस्वो माण्डूकेयः। अथ यद् वयम् अनुसंहितम् ऋचोऽधीमहे, यच् च स्वाध्यायम् अधीमहे तेन नो णकारषकारा उपाप्ताविति ह स्माऽऽह स्थविरः शाकल्यः। एतद् ध स्म वै तद् विद्वांस आहुः कावषेयाः — किमर्था वयं यक्ष्यामहे, किमर्था वयम् अध्येष्यामहे, वाचि हि प्राणं जुहुमः, प्राणे वाचं यो ह्येव प्रभवः स एवाऽप्यय इति। ता एताः संहिता नाऽनन्तेवासिने ब्रूयान् नाऽसंवत्सरवासिने नाऽब्रह्मचारिणे नाऽवेदविदे नाऽप्रवक्त्र इत्याचार्या इत्याचार्याः ॥ ११ ॥[a]

इति शाङ्खायनारण्यकेऽष्टमोऽध्यायः[1] ॥

---

१. षष्ठोध्या° वि[2]; एकादशोध्या° भा[2]।

---

a) तु. ऐआ ३, २, ६।

# अथ नवमोऽध्यायः[a]

ओं तत् सवितुर् वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥[a] तत् सवितुर् वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥[b] अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठः । दीक्षे मा मा हिंसीः ॥ १ ॥

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश् च ह वै श्रेष्ठश् च स्वानां भवति । प्राणो वै ज्येष्ठश् च श्रेष्ठश् च । यो ह वै वसिष्ठां वेद वसिष्ठो ह स्वानां भवति वाग् वै वसिष्ठा । यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिंश् च लोकेऽमुष्मिंश् च चक्षुर् ह प्रतिष्ठा । यो ह वै संपदं वेद सं हाऽस्मै कामाः पद्यन्ते श्रोत्रं ह वा उ संपत् । यो ह वा आयतनं वेदाऽऽयतनो ह स्वानां भवति मनो वा आयतनम् ।

अथ हेमा देवताः प्रजापतिं पितरम् एत्याऽब्रुवन् — को वै नः श्रेष्ठ इति । स होवाच प्रजापतिः — यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठम् इव मन्येत स वै श्रेष्ठ इति ॥ २ ॥[c]

सा ह वाग् उच्चक्राम । यथा मूका अवदन्तः प्राणन्तः प्राणेन पश्यन्तश् चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवम् इति ॥ ३ ॥

चक्षुर् होच्चक्राम । यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवम् इति ॥ ४ ॥

---

१. नास्ति भा[१,२] ।

---

*a*) तु. छां ५,१,१-१५; २,१-८ बृ ६,१,१-१४ कौ ३,३ प्र २,३-४ ।
*b*) ऋ ५,८२,१ । *c*) ऋ ३,६२,१० ।

श्रोत्रं होच्चक्राम । यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश् चक्षुषा ध्यायन्तो मनसैवम् इति ॥ ५ ॥

मनो होच्चक्राम । यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश् चक्षुषा शृण्वन्तः श्रोत्रेणैवम् इति ॥ ६ ॥

प्राणो होच्चक्राम । ततस् तद् यथेह सैन्धवः सुहयः पड्वीशशङ्कून् संखिदेद्[1] एवम् असौ प्राणान् समखिदत् । ते ह समेत्योचुः — भगवन्[2] मौत्क्रमीर् इति[3] । स होवाच प्राणः—किं मेऽन्नं[4] भविष्यति यत् किंचाऽऽश्वभ्य[a] इवाऽऽशकुनिभ्य[a] इति । किं मे वासो भविष्यतीति—आप इति होचुः । तस्माद् वा अयम् [b]अशिष्यन्[5] पुरस्ताद्योपरिष्टाच् चाऽद्भिः परिदधाति[c] । लम्भुको[6] हाऽस्य वासो भवति, अनग्नो ह भवति । तद् ध स्मैतत् सत्यकामो जाबालो [d]गोश्रुते[7] वैयाघ्रपद्यायोक्त्वोवाच — अप्येवं शुष्कस्य स्थाणोः प्रब्रूयाज् जायेरन् अस्य शाखाः प्ररोहेयुः पलाशानीति । वनस्पते शतवल्शो विरोहेति द्यां मा [e]लेखीर्[8] अन्तरिक्षं मा मा हिंसीः (मा ५, ४३) इति ह याज्ञवल्क्यः ॥ ७ ॥

अथ यदि महज् जिगमिषेत् त्रिरात्रं दीक्षित्वाऽमावास्यायां सर्वौषधस्य मन्थं दधिमधुभ्याम् उपमन्थ्याऽग्निम्[9] उपसमाधाय परिसमुह्य, परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्योत्तरतोऽग्नेः कंसे मन्थं

---

१. समखिदत् वि[3] भा[1,2] [१मो हस्तः], भा[4,5] । २. °भगव भा[1] । ३. नोत्क्र° भा[4] । ४. मे अ° भा[1,4] वि[3] । ५. °ष्यत् वि[2,3] भा[5] । ६. लंभ° भा[5] । ७. °श्रुतये वि[2] । ८. लेषीः [१मो हस्तः], रेषीः भा[3,4,5] । ९. °मथ्य वि[3] भा[5] ।

---

*a*) आ इति पं. युक्तः कप्र. । *b*) < √अश् 'भोजने'+शता प्र. (तु. छां. बृ.) । *c*) < √दध् [भ्वादि.] । °धाति K. । *d*) °तये [छां.], °श्रुताय K. । *e*) < √लिख् ([वावि.] < √रिष् 'हिंसायाम्') ।

कृत्वा हुत्वा होमान् मन्थे संपातम् आनयेत् । ज्येष्ठाय[1] श्रेष्ठाय[2] स्वाहेत्यग्नौ हुत्वा मन्थे संपातम् आनयेत् । वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संपातम् आनयेत् । प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संपातम् आनयेत् । संपदे स्वाहेत्यग्नौ हुत्वा मन्थे संपातम् आनयेत् । आयतनाय स्वोहेत्यग्नौ हुत्वा मन्थे संपातम् आनयेत् । तत् सवितुर् वृणीमहे (ऋ ५,८२,१) इति पच्छः प्राश्य तत् सवितुर् वरेण्यम् (ऋ ३,६२,१०) इति पच्छ आचामति महाव्याहृतिभिश् चतुर्थम् । निर्णिज्य कांस्यं चर्मणि वा स्थण्डिले वा संविशति । स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् समृद्धं कर्मेति विद्यात् ॥ ८ ॥

इति शाङ्खायनारण्यके नवमोऽध्यायः[3] ॥

---

१. भा[२।५] वि[२।३] K.; ज्येष्ठ्या° भा[४] । २. भा[२।५] वि[२।३] K.; श्रेष्ठ्या° भा[४] । ३. सप्त° वि[२], द्वादशोध्या° भा[२] ।

## अथ दशमोऽध्यायः

अथातोऽध्यात्मिकम् । [1]'आन्तरम् अग्निहोत्रम्'[1] इत्याचक्षते । एता ह वै देवताः पुरुष एव प्रतिष्ठिताः-अग्निर् वाचि वायुः प्राण आदित्यश् चक्षुषि चन्द्रमा मनसि दिशः श्रोत्रे आपो रेतसि । एतासु ह वै सर्वासु हुतं भवति । य एवं विद्वान् अश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ १ ॥

स तृप्तो वाचं तर्पयति । वाक् तृप्ताऽग्निं तर्पयति । अग्निस् तृप्तः पृथिवीं तर्पयति । पृथिवी तृप्ता यत् किंच पृथिव्याऽपिहितं भवद् भविष्यद् भूतं तत् सर्वं तर्पयति । य एवं विद्वान् अश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ २ ॥

स तृप्तः प्राणं तर्पयति । प्राणस् तृप्तो वायुं तर्पयति । वायुस् तृप्त आकाशं तर्पयति । आकाशस् तृप्तो यत् किंचाऽऽकाशेनाऽपिहितं भवद् भविष्यद् भूतं तत् सर्वं तर्पयति । य एवं विद्वान् अश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ३ ॥

स तृप्तश् चक्षुस् तर्पयति । चक्षुस् तृप्तम् आदित्यं तर्पयति । आदित्यस् तृप्तो दिवं तर्पयति । द्यौस् तृप्ता यत् किंच दिवाऽपिहितं भवद् भविष्यद् भूतं तत् सर्वं तर्पयति । य एवं विद्वान् अश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ४ ॥

स तृप्तो मनस् तर्पयति । मनस् तृप्तं चन्द्रमसं तर्पयति । चन्द्रमास् तृप्तो नक्षत्राणि तर्पयति । नक्षत्राणि तृप्तानि मासाँस् तर्पयन्ति ।

---

१-१. °रमित्यग्नि° मा[2] ।

मासास् तृप्ता अर्धमासाँस् तर्पयन्ति । अर्धमासास् तृप्ता अहोरात्रे तर्पयन्ति । अहोरात्रे तृप्ते ऋतूँस् तर्पयतः । ऋतवस् तृप्ताः संवत्सरं तर्पयन्ति । संवत्सरस् तृप्तो यत् किंच संवत्सरेणाऽपिहितं भवद् भविष्यद् भूतं तत् सर्वं तर्पयति । य एवं विद्वान् अश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ५ ॥

स तृप्तः श्रोत्रं तर्पयति। श्रोत्रं तृप्तं दिशस् तर्पयति[1] । दिशस् तृप्ता अवान्तरदिशस् तर्पयन्ति । अवान्तरदिशस् तृप्ता यत् किंचाऽवान्तरदिग्भिर् अपिहितं भवद् भविष्यद् भूतं तत् सर्वं तर्पयति । य एवं विद्वान् अश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ६ ॥

स तृप्तो रेतस् तर्पयति । रेतस् तृप्तम् अपस् तर्पयति । आपस् तृप्ता नदीस् तर्पयन्ति । नद्यस् तृप्ताः समुद्रं तर्पयन्ति । समुद्रस् तृप्तो यत् किंच समुद्रेणाऽपिहितं भवद् भविष्यद् भूतं तत् सर्वं तर्पयति । य एवं विद्वान् अश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ७ ॥

स तृप्तस् तद् एतद् वैराजं दशविधम् अग्निहोत्रं भवति । तस्य प्राण एवाऽऽहवनीयः । अपानो गार्हपत्यः, व्यानोऽन्वाहार्यपचनः, मनो धूमः, मन्युर् अर्चिः[2], दन्ता अङ्गाराः, श्रद्धा पयः, वाक् समित्, सत्यम् आहुतिः, प्रज्ञाऽऽत्मा स[3] रसः । तद् एतद् वैराजं दशविधम् अग्निहोत्रं हुतं भवति। लोकं रोहोभ्यां रोहोभ्याम् अभ्यारूळ्हम् अभि स्वर्गं लोकं गमयति । य एवं विद्वान् अश्नाति च पिबति चाऽऽशयति च पाययति च । अथ य इदम् अविद्वान् अग्निहोत्रं जुहोति यथाऽङ्गरान् अपोह्य भस्मनि हुतं तादृक् तत् स्यात् तादृक् तत् स्यात् ॥ ८ ॥ [a]

**इति शाङ्खायनारण्यके दशमोऽध्यायः[4] ॥**

---

१. तर्प्य° वि[3] ।  २. °न्युरच्चर्चयिता भा[5] ।  ३. नास्ति भा[1] ।
४. अष्टमोध्यायः वि[2], त्रयोदशोध्या° भा[2], °ध्यायः समाप्तः भा[1,4,5] वि[3] ।

---

*a*) तु. शांश्रौ ८,२५,३ ।

# अथैकादशोऽध्यायः

प्रजापतिर् वा इमं पुरुषम् उदञ्चत[1] तस्मिन्न् एता देवता आवेशयत् — वाच्यग्निम्, प्राणे वायुम्, अपाने वैद्युतम्[a], उदाने पर्जन्यम्, चक्षुष्यादित्यम्, मनसि चन्द्रमसम्, श्रोत्रे दिशः, शरीरे पृथिवीम्, रेतस्यपः, बल इन्द्रम्, मन्यावीशानम्, मूर्धन्याकाशम्, आत्मनि ब्रह्म। स यथा महान् अमृतकुम्भः पिन्वमानस् तिष्ठेद् [2]एवं हैव स[2] तस्थौ। अथ हेमा देवता ईक्षाञ्चक्रिरे — किम् अयम् अस्माभिः पुरुषः करिष्यति, किं वा वयम् अनेन। हन्ताऽस्माच् छरीराद् उत्क्रमामेति। ता होच्चक्रमुः। अथ हेदं शरीरं रिक्तम् इव परिसुषिरं[3] स हेक्षाञ्चक्रे प्रजापतिः — रन्ध्राय न क्षमम्[4]। हन्ताऽहम् इमा अशनायापिपासाभ्याम् उपसृजा३ इति। ता होपससृजे[5]। ता होपसृष्टाः सुखम् अलभमाना इमम् एव पुरुषं पुनः प्रत्याविविशुः ॥ १ ॥

वाङ् ममेत्यग्निर् आविवेश। प्राणो ममेति वायुर् आविवेश। अपानो ममेति वैद्युत[a] आविवेश। उदानो ममेति पर्जन्य आविवेश। चक्षुर् ममेत्यादित्य आविवेश। मनो ममेति चन्द्रमा आविवेश। श्रोत्रम् अस्माकम् इति दिश आविविशुः। शरीरं ममेति पृथिव्याविवेश। रेतोऽस्माकम् इत्याप आविविशुः। बलं ममेतीन्द्र आविवेश। मन्युर् ममेतीशान आविवेश। मूर्धा ममेत्याकाश आविवेश। आत्मा ममेति ब्रह्माऽऽविवेश[b]। स यथा महान् वृक्ष आर्द्र [6]उपसिक्तमूलस् तिष्ठेद्[6] एवं हैव [7]स तस्थौ[7] ॥ २ ॥

---

१. °ञ्चत् K.। अदंचत वि[2,3] भा[1,2,4], इदंचत° भा[5]। २-२. °समु भा[4], भा[1] [१मो हस्तः], एव हेनव स भा[5]। ३. °शुषी° वि[2]। पक्षान्तरे K. <परि+शुषिर- (√श्वस्+इरः प्र. इति [तु. MVG १३० प्रभृ.])। ४. मक्षं मूको.। ५. °पसृजे भा[2,4] वि[3]। ६-६. °क्तोमूल° भा[1,2,4,5] वि[2,3]। ७-७. समुत्त° भा[1,4,5]।

---

*a*) स्वार्थे अण् प्र.। *b*) ब्रह्मन्- [न.]।

अथायं पुरुषः प्रेष्यन्[१] पुरा संवत्सरात् संवत्सरस्य दृष्टीः पश्यति। छिद्रा छाया भवति न वा भवति। महामेघे वा मरीचीर् इव पश्येद् अनभ्रे वा विद्युतं[२] पश्येद् अभ्र एनां[३] न पश्येत्। अक्षिणी वाऽपिधाय बराटकानीव न पश्यति। कर्णौ वाऽपिधायोपब्दिम् इव न शृणोति। नाऽस्मिँल् लोके रमते। नैनं मनश् छन्दयति। इति प्रत्यक्ष-दर्शनानि ॥ ३ ॥[a]

अथ स्वप्नाः। पुरुषं कृष्णं कृष्णादन्तं पश्यति। स एनं हन्ति। वराह एनं हन्ति। मर्कट एनं हन्ति। बिसानि खादयति। सुवर्णं[४] भक्ष-यित्वाऽवगिरति। एकपौण्डरीकं[५] धारयति। गां सवत्सां दक्षिणामुखो नलदमाली[६] व्राजयति। स यद्येतेषां[७] किञ्चित् पश्येत् — पाण्डुरदर्शनां[८] कालीं स्त्रीं[९] मुक्तकेशां मुण्डां [१०]तैलाभ्यङ्गं कौसुम्भपरिधानं[१०] गीतान्युष्ट्रारोहणं दक्षिणाऽऽशागमनादीनि वीक्ष्योपोष्य पायसं स्थालीपाकं श्रपयित्वा सरूपवत्साया गोः पयसि न त्वेव तु[११] कृष्णाया अग्निम् उपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्य स्रुवेणाऽऽज्याहुतीर् जुहोति ॥ ४ ॥[a]

वाचि मेऽग्निः प्रतिष्ठितः स्वाहा। प्राणे मे वायुः प्रतिष्ठितः स्वाहा। अपाने मे वैद्युतः[b] प्रतिष्ठितः स्वाहा। उदाने मे पर्जन्यः प्रतिष्ठितः स्वाहा। चक्षुषि म आदित्यः प्रतिष्ठितः स्वाहा। मनसि मे चन्द्रमाः प्रतिष्ठितः स्वाहा। श्रोत्रे मे दिशः प्रतिष्ठिताः स्वाहा। शरीरे मे पृथिवी प्रतिष्ठिता स्वाहा। रेतसि म आपः प्रतिष्ठिताः स्वाहा। बले म इन्दुः प्रतिष्ठितः स्वाहा। मन्यौ म ईशानः प्रतिष्ठितः स्वाहा।

---

१. प्रैष्यन् भा[४,५] वि[२], वि[३] [२यो हस्तः]। २. °तः वि[३]। ३. एना वि[३]। ४. सुपव° भा[२]। ५. ऐआ.। °कः पौं° वि[२] भा[१,२,४,५]। ६. °लीं भा[१,२,५]। ७. ऐआ.। एतेषां भा[१,२,४,५] वि[२,३]। ८. °शना वि[२,३] भा[२,५], भा[१,४] [१मो हस्तः]। ९. स्त्रियं वि[२] भा[२] [१मो हस्तः]। १०-१०. °भ्यंगः कौ° वि[२,३] भा[१,२,४,५]। °भ्यंगकौ° [पक्षान्तरे] K.। ११. नास्ति भा[५]।

---

a) तु. ऐआ ३,२,४। b) स्वार्थिकः प्र.।

मूर्धनि म आकाशः प्रतिष्ठितः स्वाहा । आत्मनि मे ब्रह्म प्रतिष्ठितं स्वाहेति । अथैतद् आज्याऽवशेषं स्थालीपाके समवनीय स्थालीपाकस्योपघातं[a] जुहोति ॥ ५ ॥

वाचि मेऽग्निः प्रतिष्ठितः, वाग् हृदये, हृदयम् आत्मनि । तत् सत्यं देवानाम् । माऽहम् अकामो मरिष्यामि । अन्नवान् अन्नादो भूयासं स्वाहा ।

प्राणे मे वायुः प्रतिष्ठितः, प्राणो हृदये, हृदयम् आत्मनि । तत् सत्यं ... ... ... स्वाहा ।

अपाने मे वैद्युतः[b] प्रतिष्ठितः, अपानो हृदये, हृदयम् आत्मनि । तत् सत्यं ... ... ... स्वाहा ।

उदाने मे पर्जन्यः प्रतिष्ठितः, उदानो हृदये, हृदयम् आत्मनि । तत् सत्यं .... .... .... स्वाहा ।

चक्षुषि म आदित्यः प्रतिष्ठितः, चक्षुर् हृदये, हृदयम् आत्मनि । तत् सत्यं .... ... ... स्वाहा ।

मनसि मे चन्द्रमाः प्रतिष्ठितः, मनो हृदये, हृदयम् आत्मनि । तत् सत्यं .... .... .... स्वाहा ।

श्रोत्रे मे दिशः प्रतिष्ठताः, श्रोत्रं हृदये, हृदयम् आत्मनि । तत् सत्यं .... .... .... स्वाहा ।

शरीरे मे पृथिवी प्रतिष्ठिता, शरीरं हृदये, हृदयम् आत्मनि । तत् सत्यं .... .... .... स्वाहा ।

रेतसि म आपः प्रतिष्ठिताः, रेतो हृदये, हृदयम् आत्मनि । तत् सत्यं .... .... .... स्वाहा ।

---

*a*) °तम् इति णमुलन्तं द्र. (तु. सपा. माश १४, ९, ४, १३ ; वैतु. ?K. घञन्तमिति) । *b*) स्वार्थिकः प्र. ।

बले म इन्द्रः प्रतिष्ठितः, बलं हृदये, हृदयम् आत्मनि। तत् सत्यं ··· ···· ···· स्वाहा।

मन्यौ म ईशानः प्रतिष्ठितः, मन्युर् हृदये, हृदयम् आत्मनि। तत् सत्यं ···· ···· ···· स्वाहा।

मूर्धनि म आकाशः प्रतिष्ठितः, मूर्धा हृदये, हृदयम् आत्मनि। तत् सत्यं ···· ···· ···· स्वाहा।

आत्मनि मे ब्रह्म प्रतिष्ठितम्, आत्मा हृदये, हृदयम् आत्मनि। तत् सत्यं ···· ··· ···· स्वाहा इति।

अथैतत् स्थालीपाकशेषम् आत्मनि समवनिनीय जुहोति ॥ ६ ॥

अश्मा जागतम्, अयस् त्रैष्टुभम्, लोहम् औष्णिहम्, सीसं काकुभम्, रजतं स्वाराज्यम्, सुवर्णं गायत्रम्, अन्नं वैराजम्, तृप्तिर् आनुष्टुभम्, नाकं साम्राज्यम्, बृहस्पतिर् बार्हतम्, ब्रह्म पाङ्क्तम्, प्रजापतिर् आतिच्छन्दसम्, सावित्री सर्ववेदच्छन्दसेन च्छन्दसेति ॥ ७ ॥

अश्मेव स्थिरो वसानि जागतेन छन्दसा। पुरुषो मणिः, प्राणः सूत्रम्, अन्नं ग्रन्थिः, तं[1] ग्रन्थिम् [2]उद्ग्रथ्नाम्यन्नकामः[2] मृत्यवे ब्राह्मणम्। अपि सर्वम् आयुर् अशीयाऽऽयुष्मान्, माऽहम् अकामो मरिष्यामि, अन्नवान् अन्नादो भूयासं स्वाहा।

अय इव स्थिरो वसानि त्रैष्टुभेन छन्दसा। पुरुषो मणिः, ···· ··· ···· स्वाहा।

लोहम् इव स्थिरो वसान्यौष्णिहेन छन्दसा। पुरुषो मणिः, ··· ··· ···· स्वाहा।

सीसम् इव स्थिरो वसानि काकुभेन छन्दसा। पुरुषो मणिः, ··· ··· ··· स्वाहा।

---

१. तद् भा[?], K.।   २-२. °ग्रथानीत्यन्न° K.।

रजतम् इव स्थिरो वसानि स्वाराज्येन छन्दसा। पुरुषो मणि: .... .... .... स्वाहा।

सुवर्णम् इव स्थिरो वसानि गायत्रेण छन्दसा। पुरुषो मणि: ... ... ... स्वाहा।

अन्नम् इव स्थिरो वसानि वैराजेन छन्दसा। पुरुषो मणि: ... .... .... स्वाहा।

तृप्तिर् इव स्थिरो वसान्यानुष्टुभेन छन्दसा। पुरुषो मणि: .... .... .... स्वाहा।

नाकम् इव स्थिरो वसानि साम्राज्येन छन्दसा। पुरुषो मणि: .... .... ... स्वाहा।

बृहस्पतिर् इव स्थिरो वसानि बार्हतेन छन्दसा। पुरुषो मणि: .... ... ... स्वाहा।

ब्रह्मेव स्थिरो वसानि पाङ्क्तेन छन्दसा। पुरुषो मणि: .... ... ... स्वाहा।

प्रजापतिर् इव स्थिरो वसान्यातिच्छन्दसेन छन्दसा। पुरुषो मणि: .... .... .... स्वाहा।

सावित्रीव स्थिरो वसानि सर्ववेदच्छन्दसेन छन्दसा। पुरुषो मणि: .... .... .... स्वाहा॥ इति प्रियायै वा जायायै प्रियाय वाऽन्तेवासिनेऽन्यस्मै वापि यस्मै कामयेत तस्मा उच्छिष्टं दद्यात्। स हापि शतं वर्षाणि जीवति पुनःपुनः प्रयुञ्जानो जीवत्येव जीवत्येव॥ ८॥

इति शाङ्खायनारण्यक एकादशोऽध्याय:[1]॥

---

१. नवमोध्याय: वि[2], चतुर्दशोध्याय: भा[2]; दशमोध्याय: समाप्त: भा[1,4,5] वि[3]।

# अथ द्वादशोऽध्यायः

ओम् । हस्तिवर्चसं प्रथतां बृहद् वयो

यद् अदित्यै तन्वः संबभूव ।

तन् मह्यं समदुः सर्व[1] एत

आदित्यासो [2]अदित्या संविदानाः[2] ॥ १ ॥[a]

यत्ते वर्चो जातवेदो

बृहद् भवत्याहितम्[3] ।

तेन मा वर्चसा त्वम्

अग्ने वर्चस्विनं कुरु ॥ २ ॥[b]

यच्च [4]वर्चो वा पुरुषे[4]

[5]यच् च[5] हस्तिष्वाहितम् ।

सुवर्णे गोषु यद् वर्चो

मयि तद् धस्तिवर्चसम् ॥ ३ ॥[c]

यद् अक्षेषु हिरण्येषु

गोष्वश्वेषु यद् यशः ।

सुरायां पूयमानायां

मयि तद् धस्तिवर्चसम् ॥ ४ ॥[d]

---

१. मूको. K. । विश्वे शौ. । सर्वम् K[2] । २-२. वि[2] K. । °त्याः सं° भा[1,2,4], आदित्याः सं° वि[3] भा[5]; अदितिः सजोषाः शौ. । ३. °त्याहुतेः शौ. । ४-४. K. । वाचा वा कुरुषे भा[1,2,4,5] वि[2,3], वाचा वा पुरुषे K. । ५-५. यचच यच्च भा[5] ; यच वि[2] ।

---

*a*) तु. शौ ३,२२,१ । *b*) तु. शौ ३,२२,४ । *c*) तु. शौ १४,१,३५ । *d*) तु. शौ ६,६९,१ ।

मयि भर्गो मयि महो
मयि यज्ञस्य यद् यशः ।
तन् मयि[a] प्रजापतिर्
[1]दिवि दिवम् इव[1] दृंहतु ॥ ५ ॥[b] [१]

अश्विना सारघेण मा
समङ्क्तां[2] मधुना पयः[3] ।
यथा मधुमतीं वाचम्
आवदानि[4] जनेषु ॥ ६ ॥[c]

घृताद् उल्लुप्तो[5] मधुमान् पयस्वान्
धनञ्जयो धरुणो[6] धारयिष्णुः ।
[7]रुजन् सपत्नान्[7] अधराँश् च कृण्वन्
आरोह मां महते सौभगाय ॥ ७ ॥[d]

प्रजापते न त्वद् एतान्यन्यो
विश्वा जातानि परि ता बभूव ।
यत्कामास् ते जुहुमस् तन्नो अस्तु
वयं स्याम पतयो रयीणाम् ॥ ८ ॥[e]

---

१-१. वि[२,३], भा[५] [२यो हस्तः] । °दिविमिव भा[४] [२यो हस्तः], द्यामिव शौ. । दिवं न, यद्वा दिवेव इति पाठ इति K. प्रस्तावः? २. समहान् वि[२,३] भा[१,५], संमहान् भा[४] । ३. वयः वि[२] भा[१,५] । ४. °दामि भा[१,४,५] वि[३] । ५. उर्लु° मूको. । ६. वरुणो वि[३] । ७-७. °जंत्सप° भा[४], °जत्संपं वि[३] ।

---

*a*) तु. कौ १,६०३ । *b*) तु. शौ ६,६९,३ । *c*) तु. शौ ६,६९,२ (शौ ९,१,१९) यत्र मधुनाङ्क्तां शुभस्पती इति च अन्तिमे पादे जनाँ अनु इति च पाभे. । अपि च तु. ऋ ९,११,२ ···मधुना पयः···अशिश्रयुः इति । *d*) तु. शौ ५,२८,१४; १९,३३,२; ४६,६ । *e*) ऋ १०,१२१,१० ।

अयं सनो[१] नुदतां मे सपत्नान्
[२]इन्द्र इव[२] वृत्रं पृतनासु साळ्हा[3] ।
अग्निर् इव कक्षं विभृतः[४] पुरुत्रा
वातेषु नास्तिग्मजम्भोऽनु मार्ष्टि ॥ ९ ॥

अयं सनो[१] योनुवादी[५] कील[६]
इव वृत्रं वि पुरो[७] रुरोज ।
अनेनेन्द्रो[a] विमृधो विहत्या[b]
[८]शत्रूयताम् [b]आभरा[८] भोजनानि ॥ १० ॥[c] [२]

जयेन्द्र शत्रून् जहि[९] शूर दस्यून्
वृत्रं हत्वेव कुलिशेना[b] विवृश्च[d] ।
ओघ इव शापान्[१०] प्रणुदात् सपत्नान्
[११]जह्यात् सपत्नान्[११] स्वधितिर् वनेव ॥ ११ ॥

अनुवृश्च मध्यात् [१२]प्रतिवृश्चोपरिष्टाद्
विवृश्च[१२] पश्चात् प्रति शूर वृश्च ।
त्वया प्रणुत्तान्[13] मघवन्न् [१४]अमित्रान्
शूर रिषन्तं[१४] मरुतोऽनु यान्तु ॥ १२ ॥

---

१. =सना+उ K. । सयो भा[४] ।     २-२. इन्द्रेव इति ? K. प्रस्तावः । ३. सो° भा[५] ।     ४. भा[४]वि[२] । विभृतः वि[3] भा[१,२,५] ।     ५. योनुदवा° भा[१,४] ।     ६. किल, इन्द्र इति K. शोध-प्रस्तावः ।     ७. दुरो K[२] टि. । ८-८. °ताभ° वि[२] ।     ९. जय K. ।     १०. °पात् वि[२,3] भा[१,२,४,५] । ११-११. जह्यंत्स° भा[१,४], °ह्यंस° भा[२] ।     १२-१२. प्रविवृ° वि[२], प्रवृ° K[२]. । १३. प्राणुत्ता° भा[५], प्रणुन्ना° वि[3] ।     १४-१४. °त्रां छूरेरी [शंतं भा[२,]] °षंतं वि[२,3] भा[१,२,४,५] ।

---

*a*) <इन्द्र [सं१] । उ ।     *b*) छन्दस्तः दीर्घ इति ।     *c*) तु. ऋ ५, ४, ५ [अर्धर्चः] ।     *d*) °शेन वृश्च इति K. शोध-प्रस्तावः ।

त्वां रुद्रैर् हेतिभिः पिन्वमाना
इन्द्रं मन्वाना मरुतो जुषन्त[1] ।
सुपर्णाः[2] कङ्काः प्रमृशन्त्वेनान्
महीयतां दंष्ट्रा वर्द्धनेषु ॥ १३ ॥

ब्रह्मणुत्तस्य[3] मघवन् पृतन्यतो
विष्वग् इन्द्र भङ्गाः पतन्तु ।
मा [4]ज्ञातारम् ईशत[4] मा [5]प्रतिष्ठां
मिथो[5] [6]विघ्नाना उपयान्ति[6] मृत्युम् ॥ १४ ॥ [a]

अग्ने यशस्विन् [7]यशसे समर्पये-
न्द्रवतीम्[7] अपचितिम् इहाऽऽवह ।
अयं मूर्धा परमेष्ठी सुवर्चाः
सजातानाम्[8] उत्तमश्लोको अस्तु ॥ १५ ॥ [b] [३]

भद्रं पश्यन्त[9] उपसेदुर् आगन्[10]
ततो[11] दीक्षाम् ऋषयः स्वर्विदः ।
ततः [12]क्षत्रं बलम् ओजश् च जातं
तद् अस्मै देवा अभिसंनमन्ताम्[13] ॥ १६ ॥ [b, c]

---

१. °षंतं वि[२] भा[४,५] । २. °व° वि[3] भा[५] । ३. °त्तरस्य वि[3] । ४-४. °तारा [रं वि[3] भा[५]] णिप्सत वि[२,3] भा[१,२,४,५] । ५-५. °ष्ठा मिहो वि[२,3] भा[४,५] । ६-६. °नामुपयाति वि[२,3] भा[१,२,४,५] । ७-७. °सेममर्पयेन्द्रा° शौ. । ८. वि[२,3] ; सुजा° भा[२,४] ; सुज्ञाता° भा[१], समाना° तैसं. । ९. तैसं. तैआ. K.; पश्येम मूको., इच्छन्त शौ. । १०. °गात् मूको., अग्रे तैसं., तैश्रा. । ११. तपो तैसं. शौ. । १२. वि[3]; क्षे° वि[२] भा[१,२,४,५] । १३. °भि संनमन्तु तैसं. तैआ. उपसंनम° शौ. ।

---

*a*) तु. शौ ६,३२,३=८,८,२१; आश्रौ ३,१०,११ । *b*) तु. तैसं ५,७,४,३ । *c*) तु. शौ १९,४१,१; तैश्रा ३,११,९ ।

धाता विधाता परमोत संदृक्
प्रजापतिः परमेष्ठी सुवर्चाः[१] ।
स्तोमाँश् छन्दांसि[२] निविदो म आहुर्
एतस्मै राष्ट्रम् अभिसंनमन्ताम्[३] ॥ १७ ॥[a]

अभ्यावर्तध्वम् उपसेवताऽग्निम्[४]
अयं [५]शास्ताऽधिपतिर् नो अस्तु ।
अस्य विज्ञानम्[६] अनुसंरभध्वम्
इमं पश्चाद् अनुजीवाथ सर्वे ॥ १८ ॥[b]

अलर्दो नाम जातोऽसि
पुरा सूर्यात् पुरोषसः ।
तं त्वा सपत्नक्षयणं[७]
वेदाऽथ[८] विष्टम्भजम्भनम् ॥ १९ ॥

नार्धे [९]प्रमीयेत तरेद् द्विषन्तं[९]
कल्पेत वाक्यं पृतनाः सहेत ।
प्रमायुकं तस्य द्विषन्तम् आहुर्
इरामणिं बैल्वं यो बिभर्त्ति ॥ २० ॥ [४]

---

१. ˈविराजा तैसं. । २. °मां छं° वि[२], °माँश्छं° भा[४,१], °माछं° वि[3], °माश्छ° तैसं. । ३. °नमाम तैसं. । ४. K. । °ग्निर् मूको. । ५. शस्ता° वि[3] । ६. °ज्ञातम् भा[१] वि[२] । ७. °त्न [त्नः वि[3]] क्षप° वि[२,3] भा[१,२,४,५] । ८. °थो वि[२,3] भा[४,५] । ९-९. °येतेतरेद्वि° भा[४] ।

---

*a*) तु. तैसं ५,७,४,३-४ । *b*) तु. तैसं ५,७,४,४ ।

न स शप्तम्[१] अश्नाति किल्बिषं कृतं
नैनं दिव्यो वरुणो हन्ति भीतम् ।
नैनं क्रुद्धं[२] [३]मन्यवोऽभियन्ती-
रामणिं[३] बैल्वं यो बिभर्त्ति ॥ २१ ॥

नाऽस्य त्वचं हिंसति जातवेदाः
न मांसम् अश्नाति न हन्ति तानि ।
शतायुर् अस्मिन् [४]जरदष्टिः प्रैती-[४]
रामणिं बैल्वं यो बिभर्त्ति ॥ २२ ॥

नाऽस्य प्रजा दुष्यति जायमाना
न शैलगो भवति न पापकृत्या ।
नाऽन्यन् मिथस् तस्य कुलेषु[५] जायत
इरामणिं बैल्वं यो बिभर्ति ॥ २३ ॥

नाऽस्याऽपवादा[६] न प्रवादका[७] गृहे
न संपतन्त्यो[८] न विवेश[९] तस्मै ।
नाऽस्मिन्न् अलक्ष्मीः कृणुते निवेशनम्
इरामणिं बैल्वं यो बिभर्त्ति ॥ २४ ॥

---

१. K. । सुप्तम् मूको. । २. क्रुद्धो भा[४] । ३-३. °भिमाती [त्ती भा[२]] रा° वि[२,३] भा[२], °भिमंतीरा° भा[१,४,५] । ४-४. °ष्टि प्रे° भा[५] । ५. गृहेषु K. । ६. वि[३] भा[१,२] । °स्य प्रवा° भा[४,५] वि[२] । ७. K. । प्रवा[प्रावा भा[४]]तका मूको. । ८. °तन्त्यो K., °तत्यो भा[४] । ९. वि[३] भा[२] । °शेत वि[२] भा[४,५] ।

नैनं रक्षो न [1]पिशाचो हिनस्ति
न जम्भको नाऽप्यसुरो न यक्षः ।
न सूतिका[2] तस्य कुलेषु[3] जायत
इरामणिं बैल्वं यो बिभर्त्ति ॥ २५ ॥ [५]

नैनं व्याघ्रो न वृको न द्वीपी
न श्वापदं हिंसति किंचनैनम् ।
न[4] हस्तिनं क्रुद्धम् उपैति भीतिम्[5]
इरामणिं[6] बैल्वं यो बिभर्त्ति ॥ २६ ॥

नैनं सर्पो न पृदाकुर् हिनस्ति
न वृश्चिको न तिरश्चीनराजिः[7] ।
नैनं [8]कृष्णोऽहिर् अभिसंहत[8]
इरामणिं बैल्वं यो बिभर्त्ति ॥ २७ ॥

नैनं प्रमत्तं वरुणो हिनस्ति
न मकरो न ग्रहः शिंशुमारः[9] ।
[10]पारावाराच् छिद्रम्[10] अस्मै कृणोती-
रामणिं बैल्वं यो बिभर्त्ति ॥ २८ ॥

---

१. °चो न भा[५] । २. वि[२,३] भा[४] । नासू° भा[१,२,५] । ३. वि[3] भा[१,५] K. । °लेप्यु वि[२], °लस्य भा[२], °लेस्य भा[४] । ४. नास्ति भा[४] । ५. °त भा[४,५] वि[3], °तिम् K. °तं वि[२] भा[१,२] । ६. ईरा° वि[२] । ७. मै २,१३,२१ । °श्चिराजिः शौ ३,२७,२; °श्चीन राजा [जी K.] मूको. । ८-८. K. । °ष्णोभि° वि[3] भा[१,२,४,५], °भिसंहरते संहरत वि[२] । ९. शि° वि[२] । १०-१०. पारावारांधि° वि[२] भा[१,२,५], पारावरां छि° वि[3], परावरां छि° भा[४] ।

प्रमायुकं तस्य द्विषन्तम् आहुः
पुष्पम् इव छिन्नं सह बन्धनेन ।
ओघ[1] इव शापान्[2] प्रणुदात् सपत्नान्
इरामणिं बैल्वं यो बिभर्त्ति ॥ २९ ॥

अयं मणिः प्रतिसरो
[3]जाम्बो जीवाय[3] बध्यते ।
अनेनेन्द्रो वृत्रम् अहन्न्
ऋषिणा च मनीषिणा ॥ ३० ॥ [६]

सहेन्द्र द्विषतः सहस्वाऽरातीः
सहस्व पृतनायतः ।
नाग इव पूर्वपादाभ्याम्
अभितिष्ठ पृतन्यतः ॥ ३१ ॥

आऽगाद् अयं बैल्वो मणिः
सपत्नक्षपणो[4] वृषा ।
तं पश्यन्ति कवयः[5] सर्ववीरा
यथा सपत्नान् समरे सहेयुः ॥ ३२ ॥

अमृतं मे मणौ[6] सूत्रम्
अश्विनाव् अपिनह्यताम् ।
बैल्वः [7]सहस्रवीर्योऽसि[7] मा
ते भर्ता रिषम्[8] अहम् ॥ ३३ ॥

---

१. औ° K.। २. K² । °पात् वि¹'²'³ भा¹'²'⁴'⁵ । ३-३. °बो[१मो हस्तः] वि³,जीवांबो वि², जीबो वि³ [२यो हस्तः]। ४. मूको.। °यणो शौ. K. °त्नः क्षप° वि² । ५. कप° भा² । ६. वि¹'²'³ भा² । मणेः भा⁴ । [२यो हस्तः], मणोः भा⁵ । ७-७. सुवी° भा⁴ [१मो हस्तः]। ८. रिषाम् वि² ।

घृताद् उल्लुप्तो[१] मधुमान् पयस्वान्
धनञ्जयो धरुणो धारयिष्णुः ।
रुजन् सपत्नान्[२] अधरांश् च कृण्वन्न्
आरोह मां महते सौभगाय ॥ ३४ ॥

प्रजापते न त्वद् एतान्यन्यो
विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस् तन् नो अस्तु
वयं स्याम पतयो रयीणाम् ॥ ३५ ॥[a]

शास इत्था महाँ असि । इति पञ्च[b] ॥ [७]

अथातो मणिकल्पः । भूतिकामः पुष्येण[३] त्रिरात्रोपोषितो जीवतो हस्तिनो दन्तान् मात्राम्[४] उद्धृत्याऽग्निम् उपसमाधाय परिसमुह्य[५] परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्योत्तरतोऽग्नेः कंसे मणिं कृत्वा हुत्वा होमान् मणौ संपातम् आनयेत् । हस्तिवर्चसम् इत्येताभिः प्रत्यृचम् अष्टाभिः सप्तरात्रं मधुसर्पिषोः वासयित्वा त्रिरात्रम् एकां वा बध्नीयात् घृताद् उल्लुप्तः[६] इत्येतयर्चा । अत एवोत्तरं षड्भिर् हृदयशूलाग्रमणिं प्रतोदाग्रमणिं वा मुसलाग्रमणिं वा खदिरसारमणिं वा मांसौदने[७] वासयित्वा त्रिरात्रम् एकां वा बध्नीयात् । अत एवोत्तरं चतसृभिर् वृषभशृङ्गाग्रमणिं घृतौदने[७] वासयित्वा

---

१. उर्लु° वि[१,२,३] भा[१,४,५], उर्ल° भा[२] । २. °जाँत्स° भा[१] वि[१,३] । ३. वि[१,२] भा[५], K. ; °ष्येण भा[१,२,४], °ष्येण वि[३] । ४. °त्रम् भा[४], °त्राद् भा[२] । ५. °सह्य भा[१] । ६. उर्लु° वि[१,३] भा[१,४], उलु° वि[२], उल° भा[२] । ७. °दनेन वि[३] भा[५] ।

---

*a*) ऋ १०,१२१,१० । *b*) ऋ १०,१५२,१-५ ।

त्रिरात्रम् एकां वा बध्नीयात् । अत एवोत्तरम् एकयैरण्डमणिं तिलौदने वासयित्वा त्रिरात्रम् एकां वा बध्नीयात् । अत एवोत्तरं षोडशभिर् बैल्वं[1] सप्तरात्रं मधुसर्पिषोः[2] वासयित्वा त्रिरात्रम् एकां वा बध्नीयाद् घृताद् उल्लुप्तः[3] इत्येतयर्चा । अत एवोत्तरं पञ्चभिर् महावरास्योदोहं[4] मुद्गौदने वासयित्वा त्रिरात्रम् एकां वा बध्नीयात् । शक्तौ सति प्रथमं हस्तिच्छायायां वैयाघ्रे वा अपि चर्मण्यासीनो वा अपि जुहुयाद् आसीनो वा अपि जुहुयात् ॥ ८ ॥[5]

इति शाङ्खायनारण्यके द्वादशोऽध्यायः[6] ॥

---

१. °ल्बं वि[2] । २. वि[2,3] भा[1,2,5]; °षो वा भा[4] । ३. उलु° वि[1,3] भा[1,4], उलु° वि[2], उल° भा[2] । ४. °स्योदहं भा[4], °सोदोहं भा[1] । ५. इति कर्ममीमांसा इत्यधिकम् भा[2] । ६. पञ्चद° भा[2], दशमो° वि[2] ।

# अथ त्रयोदशोऽध्यायः

ओम् । अथातो वैराग्यसंस्कृते शरीरे ब्रह्मयज्ञनिष्ठो भवेत् । अप पुनर्मृत्युं जयति । तद् उ ह वा आत्मा द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य[1] इति ।[a] तम् एतं वेदाऽनुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनाऽनाशकेन चेति माण्डूकेयः[b] । तस्माद् एवंविच् छान्तो दान्त उपरतस् तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येद् इति[c] माण्डव्यः । योऽयं विज्ञानमय[2] पुरुषः प्राणेषु [3]स एषः 'नेति नेति' आत्मा न गृह्यः[3],[d] इदं ब्रह्म, इदं क्षत्रम्, इमे देवाः, इमे वेदाः, इमे लोकाः, इमानि सर्वाणि भूतानि, इदं सर्वं यद् अयम् आत्मा[e] । स एषः 'तत् त्वम् असि' इति[f] । आत्माऽवगम्योऽहं ब्रह्मास्मीति । तद् एतद् ब्रह्माऽपूर्वम् अपरम् अनपरम् अनन्तरम् अबाह्यम् । अयम् आत्मा ब्रह्म सर्वाऽनुभूरित्यनुशासनम्[g] इति[4] याज्ञवल्क्यः । [5]तद् एतन्नाऽपुत्राय[5] नाऽनन्तेवासिने वा[6] ब्रूयाद् इति । य इमाम् अद्भिः परिगृहीतां वसुमतीं धनस्य पूर्णां दद्यात्, इदम् एव ततो भूयः, इदम् एव ततो भूय इत्यनुशासनम्[h] । ताम् एताम् उपनिषदं वेदशिरो न यथा कथंचन वदेत् । तद् एतद् ऋचाऽभ्युदितम् ॥ १ ॥

**इति शाङ्खायनारण्यके त्रयोदशोऽध्यायः ॥[7]**

---

१. °दध्या° भा[4] । २. ज्ञान° भा[4] । ३-३. °त्मागृ° वि[2] भा[1,2,5]; °त्मावगृ° वि[1,3] K[2] । ४. °ति [इत्यनन्तरं] ह वि[3] [२यो हस्तः] । ५-५. तमेतं नापु° भा वि[2,5] वि[3] । ६. नास्ति वि[1] भा[4,5] वि[3] । ७. नास्ति वि[1,2,3] भा[5] ।

---

*a*) तु. बृ ४,५,६ । *b*) तु. बृ ४,४,२२ । *c*) तु. बृ ४,४,२३ । *d*) स एष नेतिनेत्यात्मा । अगृह्यो न हि गृह्यते इति बृ ४,४,२२; ५,१५ । *e*) तु. बृ २,४,६ । *f*) तु. छा ६,८,७; १०,३ प्रभृ. । *g*) तु. बृ २,५,१९ । *h*) तु. छां ३,२,५-६ ।

## अथ चतुर्दशोऽध्यायः

ऋचां मूर्धानं यजुषाम् उत्तमाङ्गं
सान्नां शिरोऽथर्वणां मुण्डमुण्डम् ।
नाधीतेऽधीते वेदम् आहुस् तम् अज्ञं
शिरश् छित्त्वाऽसौ कुरुते कबन्धम् ॥ १ ॥

स्थाणुर् अयं भारहारः किलाऽभूद्
अधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत् सकलं भद्रम् अश्नुते
नाकम् एति ज्ञानविधूतपाप्मा ॥ २ ॥[a] इति ।

इति शाङ्खायनारण्यके चतुर्दशोऽध्यायः[1] ॥

१. त्रयोद° भा[५] वि[३], एकाद° वि[२] ।

a) तु. यास्कः १, १८ ।

# अथ पञ्चदशोऽध्यायः

अथ वंशः। ओं नमो ब्रह्मणे नम आचार्येभ्यः। गुणाख्याच् छाङ्खायनाद् अस्माभिर् अधीतम्। गुणाख्यः शाङ्खायनः कहोला(ळा)त् कौपीतकेः। कहोल(ळ)ः कौषीतकिर् उद्दालकाद् आरुणेः[1]। उद्दालक आरुणिः[1] प्रियव्रतात् सौमापेः[2]। प्रियव्रतः सौमापिः[3] सोमपात्। सोमपः सौमात्[4] प्रातिवेश्यात्। सौमः[5] प्रातिवेश्यः प्रतिवेश्यात्[6]। प्रतिवेश्यो[6] बृहद्दिवात्। बृहद्दिवः सुम्नयोः। सुम्नयुर् उद्दालकात्। उद्दालको विश्वमनसः। विश्वमना व्यश्वात्। व्यश्वः साकमश्वात्। साकमश्वो देवरातात्। देवरातो विश्वामित्रात्। विश्वामित्र इन्द्रात्[7]। इन्द्रः प्रजापतेः। प्रजापतिर् ब्रह्मणः। ब्रह्मा[8] स्वयम्भूः। नमो ब्रह्मणे नमो ब्रह्मणे ॥ १ ॥

इति शाङ्खायनारण्यके पञ्चदशोऽध्यायः[9] ॥

इति शाङ्खायनारण्यकं समाप्तम् ॥

---

१. °रू° केचित् मूको.। २. सोम° भा[1,4,5] वि[1,2]। ३. सोमा° भा[4,5] वि[1,3]। ४. सोमा° भा[4] वि[1,2]। ५. सोम: भा[4,5] वि[1,2]। ६. प्राति° वि[1]। ७. इन्द्रियात् भा[5]। ८. °ह्मा मूको.। ९. चतुर्दशो° वि[3], भा[4]; द्वादशो° वि[2]; त्रयोदशो° वि[1] भा[5]।